# DDHASHALABHANJIKA.

A DRAMA BY

RAJASEKHARA KABI.

EDITED WITH A COMMENTARY BY

NDIT JIBANANDA VIDYASAGARA B. A.

Superintendent Free Sanskrit College Calcutta.

# बिद्धशालभञ्जिका ।

नाटिका

श्रीराजशेखर कविविरचिता

बि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागरभट्टाचार्य्येण

विरचितव्याख्यासमेता




CALCUTTA;

PRINTED AT THE SARASWATI PRESS.

1883

be had from Pandit Jibananda Vidyasagara, B. A.

Superintendent, Free Sanskrit College, Calcutta.

# एतानि मुद्रितानि संस्कृतपुस्तकानि।

| | | |
|---|---|---|
| १ | आशुबोध व्याकरणम् | २।० |
| २ | धातुरूपादर्शः | २ |
| ३ | शब्दस्तोम महानिधिः | १० |
| ४ | सिद्धान्तकौमुदी सरला सहिता | ११ |
| ५ | सिद्धान्तविन्दुसार (वेदान्त) | ॥ |
| ६ | तुलादानादिपद्धतिः (वङ्गाक्षरैः) | ४ |
| ७ | गयाश्राद्धादि पद्धतिः | १ |
| ८ | शब्दार्थरत्नम् | ॥। |
| ९ | वाक्यमञ्जरी (वङ्गाक्षरैः) | । |
| १० | छन्दोमञ्जरी तथा वृत्तरत्नाकर सटीक | ।✓ |
| ११ | वेणीसंहार नाटक सटीक | १ |
| १२ | मुद्राराक्षस नाटक सटीक | १॥ |
| १३ | रत्नावली नाटिका सटीक | ॥। |
| १४ | मालविकाग्निमित्र सटीक | १॥ |
| १५ | धनञ्जय विजय सटीक | । |
| १६ | महावीरचरितनाटक | १॥ |
| १७ | साङ्ख्यतत्त्वकौमुदी सटीक | २ |
| १८ | वैयाकरणभूषणसार | ॥। |
| १९ | लीलावती | ॥। |
| २० | वीजगणित | १ |
| २१ | शिशुपालवध सटीक (माघ) | ४ |
| २२ | किरातार्जुनीय सटीक | २॥ |
| २३ | कुमारसम्भव पूर्वखण्ड सटीक | ॥। |
| २४ | कुमारसम्भव उत्तरखण्ड | ॥ |
| २५ | अष्टकम् पाणिनीयम् | ॥। |
| २६ | वाचस्पत्यम् (वृहदभिधान) | १३२ |
| २७ | कादम्बरी सटीक | ४ |
| २८ | राजप्रशस्ति | ✓ |
| २९ | अनुमानचिन्तामणि तथा अनुमानदीधिति | [illegible] |

| | |
|---|---|
| ३० | सर्वदर्शनसंग्रहः |
| ३१ | भामिनीविलास सटीक |
| ३२ | हितोपदेश सटीक |
| ३३ | भाषापरिच्छेद मुक्तावलीसहित |
| ३४ | बहुविवाहवाद |
| ३५ | दशकुमारचरित सटीक |
| ३६ | परिभाषेन्दुशेखर |
| ३७ | कविकल्पद्रुमः धातुपाठः |
| ३८ | चक्रदत्त (वैद्यक) |
| ३९ | उणादिसूत्र सटीक |
| ४० | मेदिनीकोष |
| ४१ | पञ्चतन्त्रम् |
| ४२ | विद्वन्मोदतरङ्गिणी (चम्पूकाव्य |
| ४३ | माधवचम्पू |
| ४४ | तर्कसंग्रह |
| ४५ | प्रसन्नराघव नाटक |
| ४६ | विवेकचूडामणि |
| ४७ | काव्यसंग्रह (सम्पूर्ण) |
| ४८ | लिङ्गानुशासन सटीक |
| ४९ | ऋतुसंहार सटीक |
| ५० | विक्रमोर्वशी (सटीक) |
| ५१ | वसन्ततिलक भाण |
| ५२ | गायत्री व्याख्या |
| ५३ | सांख्यदर्शन (भाष्यसहित) |
| ५४ | भोजप्रबन्ध |
| ५५ | नलोदय सटीक |
| ५६ | ईश केन कठ प्रश्न मुण्ड माण्डूक्य (सटीक सभाष्य |
| ५७ | छान्दोग्य सटीक सभाष्य |
| ५८ | तैत्तिरीय ऐतरेय श्वेता (सटिप्पण) [illegible] सटीक |

# विद्धशालभञ्जिका।

नाटिका

महाकविश्रीराजशेखरविरचिता

बि, ए, उपाधिधारिणा
श्रीजीवानन्द विद्यासागरभट्टाचार्य्येण
विरचितव्याख्यासमेता।

द्वितीयसंस्करणम्

कलिकाता-राजधान्याम्
सरस्वतीयन्त्रे मुद्रिता।

इं १८८३

# विद्धशालभञ्जिका।

## प्रथमोऽङ्कः।

कुलगुरुरबलानां केलिदीक्षाप्रदाने
परमसुहृदनङ्गो रोहिणी-वल्लभस्य।
अपि कुसुमपृषत्कैर्देवदेवस्य जेता
जयति सुरतलीला-नाटिका-सूत्रधारः॥ १॥

अपि च।

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः॥ २॥

---

(१) तत्रादौ कामदेवस्तुतिरूपमङ्गलमाचरन् ग्रन्थस्य शृङ्गाररसप्रधानत्वेन सहृदयानुन्मुखीकरोति कुलेति दृशेति च द्वाभ्याम्। अबलानां दुर्बलानां मानसिकदौर्बल्यवतामित्यर्थः कामिनां कामिनीनाञ्च केलिः सुरतक्रीड़ा तत्र या दीक्षा शिक्षा तस्याः प्रदाने कुलगुरुः चिरन्तनोपाध्यायः, रोहिणीवल्लभस्य चन्द्रमसः परमसुहृत् प्रियसखः कुसुमपृषत्कैः पुष्पशरैः देवदेवस्य इन्द्रस्य हरस्य वा अपि किमन्येषामिति भावः। जेता तथा सुरतलीला एव नाटिका अभिनयात्मकसन्दर्भविशेषः तस्याः सूत्रधारः सूचकः अनङ्गः कामः जयति सर्वोत्कर्षेण वर्त्तते। मालिनीवृत्तमिदं, ननमयययुतेयं मालिनीभोगिलोकैरिति लक्षणात्।

(२) या वामलोचनाः सुदृशः कुटिलनयना वा दृशा हर-

(क) (समाधाय)

गोनासाय नियोजितागदरजा सर्पाय बद्धौषधिः
कण्ठस्थाय विषाय वीर्य्यमहतः पाणौ मणीन् बिभ्रती।
भर्त्तुर्भूतगणाय गोत्रजरती-निर्द्दिष्टमन्त्राक्षरा
रक्षत्वद्रिसुता विवाहसमये प्रीता च भीता च वः ॥२॥

(ख) नान्द्यन्ते सूत्रधारः—(नेपथ्याभिमुखमवलोक्य) (ग) न

---

नयनेन दग्धं भस्मीकृतं मनसिजं कामं दृशा एव नयनेनैव न तु अन्येन प्रकारेणेति भावः जीवयन्ति, अतः विरूपाक्षस्य विरूपाणि विषमाणि अक्षीणि यस्य तादृशस्य हरस्य जयिनीः विजेत्रीः ताः वामलोचनाः स्तुमे स्तौमि। पथ्यावक्त्रं वृत्तं, युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितमिति लक्षणात्।

(क) समाधाय सामाजिकान् अवहितान् विधाय इत्यर्थः।

(२) गोनासायेति। भर्त्तुरिति सर्वत्र सम्बध्यते। भर्त्तुः शिवस्य गोनासाय तदाख्यसर्पविशेषाय तद्भयशान्तये इत्यर्थः नियोजितं धृतं अगदरजः भैषज्यचूर्णं यया तथोक्ता, सर्पाय अन्यविधाय पन्नगाय तद्भयशमनायेत्यर्थः बद्धा ओषधयः यया तादृशी, कण्ठस्थाय विषाय कालकूटाय तद्भयशमनार्थमित्यर्थः वीर्य्यमहतो अतिवीर्य्यान् मणीन् पाणौ बिभ्रती दधाना तथा भूतगणाय तद्भयनिवारणायेत्यर्थः गोत्रजरतीभिः कुलवृद्धाभिः निर्द्दिष्टानि दत्तानि शिक्षितानीति यावत् मन्त्राक्षराणि भूतापसारणानीति भावः यस्यै तथाभूता विवाहसमये पाणिग्रहावसरे प्रीता सन्तुष्टा च मृत्युञ्जयपतिलाभादिति भावः भीता च तत्संसर्गिभ्यः पन्नगादिभ्य इति भावः अद्रिसुता पार्वती वः युष्मान् सामाजिकानित्यर्थः रक्षतु। शार्दूलविक्रीडितं वृत्तं, सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति लक्षणात्।

(ख) नान्द्यन्ते इति। देवद्विजनृपादीनामाशीर्वादपरायणा।

जाने का पुनरद्य श्रीयुवराजदेवस्य परिषदाज्ञा ?

नेपथ्ये गीयते—

कुन्दलदाए विमुक्कमअरन्दरसाए वि चञ्चरीअओ ।
पणअप्परूढप्पेम्मभरभञ्जनकाअरभावभीअओ ॥ ४ ॥
तरुणीं तरट्टिअं णिअपिअं विअ चारुपसूणदिट्टिअं ।
रक्खइ णअइ धुणइ परिरम्भइ चुम्बइ चूदयट्टिअं ॥५॥

---

( ४ ) कुन्दलतायाः विमुक्तमकरन्दरसाया अपि चञ्चरीकः ।
प्रणयप्ररूढप्रेमभरभञ्जनकातरभावभीतः ॥
( ५ ) तरुणीं प्रगल्भां निजप्रियामिव चारुप्रसूनदृष्टिम् ।
रक्षति नयति परिरम्भते चुम्बति चूतयष्टिम् ॥

---

नन्दन्ति देवता यस्मात्तस्मान्नान्दीति कीर्त्तिता । सा च सूत्रधारेणैव पठ्यते तथोक्तं, सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः । पादैस्त-भिरष्टाभिस्तथा द्वादशकैरपीति । तादृश्या नान्द्या अन्ते अवसाने सूत्र-धारस्तदाख्यः प्रधाननटः नेपथ्याभिमुखं भूमिकागृहं प्रति इत्यर्थः । वदतीति सर्वत्र योज्यम् ।

( ग ) न जाने इति । अद्य पुनः श्रीयुवराजदेवस्य परिषदाज्ञा सभ्यादेशः का ? सभ्याः किमाज्ञापयन्तीत्यर्थः न जाने न वेद्मि ।

( ४ ) कुन्दलतायाः इति । चञ्चरीको भ्रमरः विमुक्तः विहीनः अस्वीकृतो वा मकरन्दः पुष्परस एव रसः रागो यया तादृश्या अपि कुन्दलतायाः प्रणयेन अनुरागेण प्ररूढं प्रकर्षगतं यत् प्रेम तस्य भरस्य आतिशय्यस्य भञ्जने निरसने यः कातरभावः कातर्यं तस्मात् भीतः तत्प्रणयभङ्गभीरुरित्यर्थः एतेनास्य दक्षिणनायकव्यवहारः सूचितः ।

(५) चारूणि प्रसूना एव दृष्टयो यस्यास्तां प्रगल्भां प्रौढां तरुणीं निजप्रियामिव चूतयष्टिं सहकारलतां रक्षति काकादिभ्यः

सूत्रधारः ( आकर्ण्य ) अये ! ( घ ) यायावरेण दौहिकिना कविराजशेखरेण विरचितायां विद्धशालभञ्जिका नाम (ङ) नाटिकायां ( च ) वस्तूपक्षेपो गीयते

---

उपघातकेभ्यः जारादिभ्यश्चेति भावः नयति स्वं प्रापयति। धुनोति कम्पयति हस्तादिना गात्रं स्पृशतीति भावः परिरम्भति आलिङ्गति चुम्बति च। अनेन च वसन्तर्तुधर्मकीर्त्तनेन ऋतुं कञ्चिदुपादायेति नाटकनियमो रक्षितः। अत्र च निजप्रियामिवेत्युपमया रक्षतीत्यादीनामनुप्राणनात् उपमानुप्राणितदीपकालङ्कारः, अथ कारकमेकं स्यादनेकासु क्रियासु चेदिति लक्षणात्।

( घ ) यायावरेण कल्याणविशेषेण यो नैकत्र तिष्ठति सततं स्थानात् स्थानं परिव्रजति तस्यैव यायावरसंज्ञा। दौहिकिना दुहिकसन्तानेन। विद्धशालभञ्जिका विद्धा या शालभञ्जिका पुत्तलिका, सैव नाम यस्यास्तथाभूता नाटिका तस्याः स्तम्भे शालभञ्जिकादर्शनेन इयमियमित्यादिना प्रथमाङ्के स्वप्नदृष्टा दोलान्दोलिनी कृतकन्दुकक्रीड़ा सैवैषा त्वया लक्षिता तव चित्तमाक्षिपतीत्यादिना द्वितीयाङ्कशेषे च निर्दिष्टा पुत्तलिकैव एतन्नाटिकाभिधानस्य प्रवृत्तिनिमित्तमिति बोध्यम्।

(ङ) नाटिकालक्षणं यथा—कौशिकीवृत्तिसंयुक्ता नारीपरिजनोज्ज्वला। चतुर्थसन्धिहीना च नाटिका नृपनायका। इयं शृङ्गारबहुला ततः स्यात् कैशिकीमयी। स्त्रीयं कैशिकी वृत्तिर्न स्यादन्यरसाश्रया। न कुञ्जरकराघातमात्रं शक्नोति कन्दली। नास्यां विटः पीठमर्द्दः सञ्जयो वाथ सञ्जयः। अन्तःपुरचरो राज्ञः दैवविद्यो विदूषकः। अत्र भार्य्याजितो राजा निभृतः काममाचरेत्। अन्तःपुरगतां कन्यां देवीगुप्तां यियासति। मन्त्रिणि न्यस्य राज्यन्तु सुखसंस्थापितः प्रभुः। युवा भूमिपतिः प्रायो निभृतः काममाचरेत् इति।

( च ) वस्तूपक्षेपो—वस्तु इति वृत्तं तत् उपक्षिप्यते सूच्यते अनेनेति वस्तूपक्षेपः वर्णनीयेतिवृत्तसूचकपद्यबन्ध इति यावत्।

(विभाव्य) तन्मन्ये तदभिनये श्रीयुवराजदेवस्य परिषदाज्ञा। तदहमपि मन्त्रिणो भागुरायणस्य प्रतीकवृत्त्या शिष्यैर्विहितचारुनाम्नोऽन्तेवासिनो हरदासस्य (छ) भूमिकां सम्पादयामि।

(ज) आकाशे—सखे सोमदत्त! किमात्थ? तदकालजलदस्य (झ) प्रणप्तुस्तस्य गुणगणः किमिति न वर्ण्यते?

तत्रैव, शृणु—

किमपरमपरैः परोपकार-
व्यसननिधेर्गणितैर्गुणैरमुष्य।
रघुकुलतिलको महेन्द्रपालः
सकलकलानिलयः स यस्य शिष्यः॥ ६॥

---

प्रतीकवृत्त्या प्रतीकोऽवयवः अङ्गं प्रतीकोऽवयव इत्यमरः। तस्य वृत्त्या वर्त्तनेन शैवव्यवहारेण भस्मविभूत्यादिधारणेनेति यावत् हेतुना।

(छ) भूमिकां नेपथ्यपरिग्रहम्।

(ज) आकाशे—किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्।
श्रुत्वेवानुक्तमप्येतत् तत् स्यादाकाशभाषितम्॥

(झ) अकालजलदस्य तदाख्यस्य प्रणप्तुः प्रपौत्रस्य।

(६) किमिति। सकलानां चतुःषष्टिविधानां कलानां विद्यानां निलयः आश्रयः महेन्द्रस्य तदाख्यस्य पर्वतस्य पालः अधिपतिः यद्वा महेन्द्रस्य देवराजस्य पालः यज्ञाद्यनुष्ठानात् असुरपराजयसाहाय्यकरणाच्चेति भावः स प्रसिद्धो रघुकुलतिलकः रघुवंशीयः राजविशेषः अथवा रघुवंशतिलकः महेन्द्रपालः तदाख्यो नरपतिः यस्य शिष्यः यत्सकाशात् सर्वां विद्याः अधीतवानिति भावः। परोपकारव्यसननिधेः परोपकारैकनिरतस्य तस्य अमुष्य गणितैः संख्यातैः अपरैः गुणैः अपरम्

आकर्ण्य च (ञ) गोष्ठीगरिष्ठस्य कृष्णशङ्करशर्म्मणो वाचः ।

पातुं श्रोत्ररसायनं रचयितुं वाचः सतां सम्मताः
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः ।
भोक्तुं स्वादु फलं च जीविततरोर्यद्यस्ति ते कौतुकं
तद् भ्रातः ! शृणु—राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥७॥

(निष्क्रान्तः ।)

इति प्रस्तावना (ट) ।

---

अन्यत् किम् एतदपेक्षया तस्य कान्या स्तुतिरिति भावः । पुष्पिताग्रावृत्तम्, अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति लक्षणात् ।

(ञ) गोष्ठीगरिष्ठस्य सभाश्रेष्ठस्य कृष्णशङ्करशर्मणः कस्यचित् तदाख्यस्य द्विजस्य वाचः वचनानि वक्ष्यमाणपद्यरूपाणीति यावत् ।

(७) पातुमिति । हे भ्रातः ! यदि ते तव श्रोत्राभ्यां कर्णाभ्यां रसायनं रसस्य आनन्दरूपस्य अयनम् आस्पदम् आनन्दपूर्णं वस्तु इति यावत् पातुं सादरं श्रोतुमिति भावः । सतां सहृदयानां सम्मताः मनोरञ्जिनीः वाचः रचयितुं वक्तुमित्यर्थः, परमाम् उत्कृष्टां व्युत्पत्तिं ज्ञानम् अवाप्तुं लब्धुं रसस्रोतसः आनन्दप्रवाहस्य अवधिं परां काष्ठामित्यर्थः लब्धुं प्राप्तुं (किं बहुना) जीविततरोः जीवनरूपस्य वृक्षस्य स्वादु सुस्वादं फलं भोक्तुञ्च कौतुकं अभिलाषोऽस्ति तदा राजशेखरकवेः सुधास्यन्दिनीः अमृतस्राविणीः सूक्तीः सुष्ठु वचनानि शृणु । शार्दूलविक्रीडितं वृत्तम् ।

(ट) प्रस्ताव्यते सूच्यते सन्दर्भार्थोऽनयेति प्रस्तावना । तदुक्तं

नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं नाम तज्ज्ञेयं नाम्ना प्रस्तावनापि चेति ॥

( ततः प्रविशति हरदासः )

हरदासः। सशिरःकम्पम्। अहह! प्रज्ञाप्रकर्षः सर्वेषामुपरि वसति। तदुक्तम्—

श्रियः प्रदुग्धे विपदो रुणद्धि
यशांसि सूते मलिनं प्रमार्ष्टि।
संस्कारशौचेन परं पुनीते
शुद्धा हि बुद्धिः किल कामधेनुः ॥ ८ ॥

(ठ) तदिदं चास्मद्दुरीश्वरितेषु परमुपलभ्यते। तथाहि—

लाटेन्द्रश्चन्द्रवर्म्मा नरपतितिलकः कल्पिता तेन पुत्री,
निष्पुत्रेणैकपुत्रः कथितमपि तथा मन्त्रिणस्तस्य चारैः।
कामं पुत्रावकल्पच्छलत इह महाराजसन्दर्शनार्थं
तेनाद्यानायितासौ निरुपधि दधता साधु षाड्गुण्यचक्षुः ॥९॥

---

(८) मलिनं मलदूषितं प्रमार्ष्टि मलनिष्काशनेन शोधयतीत्यर्थः। कामधेनुः सर्वाभिलाषपूरणीत्यर्थः। उपेन्द्रवज्रेन्द्रवज्रयोः संकरत्वा उपजातिवृत्तमिदम् अनन्तरोदीरितलक्ष्मभाजौ पादौ तदीयावुपजातयस्ता इति लक्षणात्।

(ठ) तदिदं प्रज्ञाप्रकर्षरूपं वस्तु। परमत्यर्थम् उपलभ्यते अनुमीयते।

(९) लाटेन्द्र इति। लाटेन्द्रः तदाख्यजनपदाधीश्वरः नरपतितिलकः राजवरः चन्द्रवर्मा नाम आसीदिति शेषः स तु पुत्रहीनः, केवलमस्य कन्यैकासीत्। निष्पुत्रेण तेन सा पुत्री एकपुत्रः मुख्यपुत्रः औरस इत्यर्थः कल्पिता प्रचारिता तस्य नृपतेः मन्त्रिणः चारैः तथैव कथितमपि प्रचारितमपि। अद्य इह नगरे महाराजस्य कोरलाधिपतेः सन्दर्शनार्थं गुणाः सन्ध्यादयः तदुक्तं सन्धिर्ना विग्रहो यान-

आकाशे—आर्य्य ! चारायण ! किमात्थ ? । (ङ) अन्तेउरिका सहस्सपरिवारस्स महाराअस्स किं तीए विणा विसूरदित्ति (१)। मा मैवम्। अत्र किञ्चन वीजमस्ति, तत्कार्य्यसिद्धावाविर्भविष्यति।

नेपथ्ये पच्चूससुहपडिबुद्धस्स सुप्पभादं देवस्स। संपदं खु (२)।

---

(१) अन्तःपुरिकासहस्रपरिवारस्य महाराजस्य किं तया विना विसंवति इति।

(२) प्रत्यूषसुखप्रतिबुद्धस्य सुप्रभातं देवस्य। साम्प्रतं खलु—

---

सासनं द्वैधमाश्रयः। षट्गुणा इति षट् च ते गुणाश्चेति षट्गुणाः ते एवेति षाड्गुण्यं स्वार्थे ष्यञ्प्रत्ययः। तदेव चक्षुः साधु सम्यक् निरुपधि अकपटं यथा तथा दधता तेन प्रसिद्धेन केरलाधिपतिसन्त्रिणा कामं पुत्रावकल्पच्छलतः। पुत्र एव अवकल्पः प्रतिभूस्वरूपः यावत् त्वं मह्यं सम्यक् राजस्वादिकं दातुं न शक्नोषि तावत् ते पुत्रोऽयं मत्समीपे तिष्ठतु इत्येवं रूपः महाराष्ट्रेषु अद्यापि एष राजव्यवहारः ओल इति व्यवह्रियते। स एव छलं तस्मात् तादृशं छलम् आश्रित्येत्यर्थः ल्यबर्थे पञ्चमी। असौ पुत्र इति प्रचारिता लाटाधीश्वरसुता आनायिता दूतादिभिरिति शेषः। अयमेवास्य प्रज्ञाप्रकर्षः यत् तथाविधप्रचारस्य कल्पितत्वं बुद्ध्वा तादृशेन छलेन प्रभोर्मनोरथः सम्पादित इति। स्रग्धरावृत्तं म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति लक्षणात्।

(ङ) विसूरदित्ति विसंवतीति संस्कृतम्। अन्तःपुरिकासहस्रपरिवारस्य सहस्रान्तःपुरनायिकासेवितस्य महाराजस्य केरलेश्वरस्य तया लाटेश्वरदुहिता विना किं विसंवति स्खलति न किमपीत्यर्थः।

माणी जाण ण खण्डिदी ससिअरुक्केरेण वित्थारिणा
हुंकारा ण अ पंचमस्स वि चिरं जासु ठ्ठिदा कुंठिदा ।
पच्चूसाणिअ दोलणेन ललणा मोत्तू णु माणग्गहं
चूडाचुंबिदवल्लहग्गचलणा वट्टन्ति ता संपदम् ॥ १० ॥

पुनस्तत्रैव । भोभो बंदिविंदारआ संति विणिम्मिद-महाराअवासघरपेरंतनिवासी महल्लअलोओ तुह्मे भणादि कोवि अ कालो विबुद्धस्स विज्जाहरमल्लदेवस्स । ता की त्ति (ढ) पभादभोआवलिं ण गायध त्ति । तत्रैव ।

---

(१०) मानो यासां न खण्डितः शशिकरोत्करेण विस्तारिणा,
हुङ्कारा तु च पञ्चमस्यापि चिरं यासु स्थिताः कुण्ठिताः ।
प्रत्यूषानिलदोलनेन ललना मुक्त्वा तु मानग्रहं,
चूडाचुम्बितवल्लभाग्रचरणा वर्त्तन्ते हि ताः साम्प्रतम् ॥

भो भो वन्दिवृन्दारकाः ! मन्त्रिविनिर्मितमहाराजवासगृहपर्यन्त-निवासी अन्तःपुरलोको युष्मान् भणति—कोऽपि च कालो विबुद्धस्य विद्याधरमल्लदेवस्य ? तत् किमिति प्रभातभोगावलीं न गायतेति ?

---

(१०) मान इति । शशिकराणां चन्द्रकिरणानाम् उत्करेण समूहेन । पञ्चमस्य लक्षणया पञ्चमस्वरनादिनः कोकिलस्य पिकः कूजति पञ्चममिति वचनादिति भावः, हुङ्काराः कुण्ठिताः सङ्कुचिताः विफला इति यावत् । प्रत्यूषानिलदोलनेन प्रभातसमीरणकम्पनेन । सर्वत्र उद्दीपकत्वादिति भावः, अत्र विभावनाविशेषोक्त्योः सङ्करः ।

( ढ ) प्रभातभोगावलीं प्रभाते प्रत्यूषे या भोगावली राजकीय-स्तुतिविशेषरूपा ताम् । उज्जयिनीभुजङ्ग ! उज्जयिनी नगरी तस्या नायिकाभूताया भुजङ्गः कामुकः तत्सम्बुद्धिः । भुजङ्गो विटसर्पयो-रिति कोषः ।

जयजयोज्जयिनीभुजङ्ग ! सुप्रभातं भवतः । सम्प्रतिहि—

छिन्नैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकै-
र्ज्योत्स्नापानसमालसेन वपुषा मत्ताश्चकोराङ्गनाः ।
यातोऽस्ताचलचूलमुद्वसमधुच्छत्रच्छविश्चन्द्रमाः
प्राची बालबिड़ाललोचनरुचां जाता च पात्रं ककुप् ॥ ११ ॥

अपि च ।

भिन्दानः सुन्दरीणां पतिषु रुषमयं हर्म्यपारावतेभ्यो
वाचालत्वं ददानः कवयितृषु गुणं प्रातिभं सन्दधानः ।
प्रातस्त्यस्तूर्य्यनादः स्थगयति गगनं मांसलः पांसुतल्पा-
दस्वल्पादुत्थितानां नरवरकरिणां शृङ्खलाशिञ्जितेन ॥ १२ ॥

---

(११) छिन्नैरिति पुराणा ये मौक्तिकमणयः मुक्ताफलानि तेषां छायेव छाया कान्तिर्येषां तादृशैः छिन्नैः तारकैः नक्षत्रैः स्थितम् । ज्योत्स्नानां पानेन समालसेन सम्यक् आलस्ययुक्तेन वपुषा शरीरेण तेन उपलक्षिताः अत एव मत्ताः चकोराणाम् अङ्गनाः इतस्ततो धावन्तीति शेषः । उद्वसस्य गतस्य मधुनः यत् छत्रं पटलं तस्येव छविः कान्ति-र्यस्य तादृशः चन्द्रमाः अस्ताचलचूलं अस्तपर्वतशिखरं याति । तथा प्राची ककुप् दिक् बालबिड़ालस्य यत् लोचनं नयनं तस्य रुचां कान्तीनां पात्रं जाता । शार्दूलविक्रीड़ितं वृत्तम् ।

(१२) भिन्दान इति । अयं प्रातस्त्यः प्रातःकालीनः तूर्य्यनादः वादित्रध्वनिः सुन्दरीणां पतिषु रुषं प्रणयकोपं भिन्दानः नाशयन्, हर्म्यपारावतेभ्यः वाचालत्वं ददानः तान् वाचालान् कुर्वन्नित्यर्थः, कव-यितृषु कविषु प्रातिभं प्रतिभोज्ज्वलं गुणं भावं सन्दधानः समर्पयन् तदानीं प्रज्ञाविशुद्धिदर्शनादिति भावः तथा अस्वल्पात् आयतात् पांसु-तल्पात् धूलिशयनात् उत्थितानां नरवरकरिणां राजहस्तिनां शृङ्ख-

हरदासः । मद्दत्येव प्रभाते प्रबुद्धो देव इति मन्त्रि-मन्त्रप्रभाव एवैषः । यतः—

कारुभिः कारितं तेन कृत्रिमं स्वप्नहेतवे ।
सुषिरस्तम्भसञ्चारं ( २ ) नृपतेर्वासमन्दिरम् ॥ १२ ॥

तदहमपि सुषिरस्तम्भसञ्चारं वासगृहं निर्मितवतां तथाविधां च रत्नवतीं (ण) चतुष्किकां करिष्यतां शिल्पवतां मन्त्रिसमादिष्टं दापयितुं महाभाण्डागारं प्रति यास्यामि ( इति निष्क्रान्तः । )

इति विष्कम्भकः (त) ।

---

(ततः प्रविशति राजा सोत्कण्ठो द्वारावस्थितो विदूषकश्च)

राजा । साङ्गभङ्गमुत्थाय पठति—

---

वाग्मिश्रितेन मांसलः परिपुष्टः सन् गगनं व्यागयति उच्चैर्ध्वनतीत्यर्थः । स्रग्धरावृत्तम् ।

( १२ ) कारुभिरिति । तेन महामन्त्रिणा कारुभिः शिल्पिभिः नृपतेः स्वप्नहेतवे सुखशयनार्थं सुषिरस्तम्भसञ्चारं सुषिरस्तम्भानां सच्छिद्रस्तम्भानां सञ्चारः स्थितिर्यस्मिन् तादृशं कृत्रिमं कस्यापि अभीष्टस्य सिद्धये प्रकल्पितं वासमन्दिरं कारितं निर्मापितम् । पथ्यावक्त्रं वृत्तम् ।

( ण ) चतुष्किकां चतुरस्रयुतां चतुःशालामित्यर्थः ।

( त ) विष्कम्भकः वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः । संक्षिप्तार्थस्तु विष्कम्भो मध्यपात्रप्रयोजित इत्युक्तलक्षणः ।

तद्वक्त्रं यदि,मुद्रिता शशिकथा,हा हेम ! सा चेद् द्युतिः,
तच्चक्षुर्यदि, हारितं कुवलयै, स्तच्चेत् स्मितं, का सुधा ? ।
धिक्कन्दर्पधनु, र्भ्रुवौ च यदि ते, किं वा बहु ब्रूमहे ।
यत् सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः ॥ १४ ॥

विदूषकः । ( उपसृत्य ) सोत्थि वठ्ठदु भवं । ( १ )

---

( १ ) स्वस्ति वर्धतां भवान् ।

---

( १२ ) तद्वक्त्रमिति । तद् वक्त्रं मुखं चेत् अस्तीति शेषः सर्वत्र हृदयस्थायाः कस्याश्चित् नायिकाया इति योज्यम् । तदा शशिकथा चन्द्रसम्बन्धिनी वार्त्ता मुद्रिता अस्तमिता न कोऽपि चन्द्रं चारुतया कीर्त्तयेदिति भावः । सा द्युतिः कान्तिश्चेत्, हेम काञ्चनं हा शोचनीयं भवतीत्यर्थः हाशब्दः शोकव्यञ्जकोऽव्ययः । काञ्चनमपि न प्रशस्यते जनैरिति भावः । तत् चक्षुः नयनं यदि तिष्ठतीति शेषः तदा कुवलयैः नीलोत्पलैः हारितं पराजितं नीलोत्पलानि न कोऽपि स्तुवन्तीति भावः । तत् स्मितं मृदुहसितं चेत् सुधा अमृतं का ? न केनाप्याद्रियते इति भावः । यदि च ते भ्रुवौ स्त इति शेषः, तदा कन्दर्पधनुः मदनशरासनं धिक् निन्दामीत्यर्थः धिक् निर्भर्त्सननिन्दयोरित्यमरः । बहु अधिकं वा किं ब्रूमहे कथयामः, वेधसः ब्रह्मणः सर्गक्रमः सृष्टिनियमः पुनरुक्तवस्तुविरसः पुनरुक्तेषु वस्तुषु विरसः अप्रवृत्तः एकरूपाणां वस्तूनां पुनः पुनः करणं न सृष्टिनियम इति भावः । इति यत् तत् सत्यम् । पुनरुक्तवस्तुविमुख इति वा पाठः । शार्दूलविक्रीड़ितं वृत्तम् । अत्र प्रसिद्धोपमानानां निष्फलत्वप्रतिपादनात् प्रतीपाख्योऽयमलङ्कारः । तदुक्तं, प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनं निष्फलत्वाभिधानञ्च प्रतीपमिति कथ्यते इति ।

राजा । तदेव पठति ।

विदूषकः । ही ही भोः ! (थ) अपुव्वोविअ पाभादिओ पठणविही पिअवअस्सस्स (१) ।

राजा । तथैव ।

विदूषकः । अहो से (द) हिअअविक्खेवो ता किं णु खु एदं । (विचिन्त्य) भोदु अणुवन्धिस्सं । णहु अपीडिओ सहआरवेंटगंठी वि रससव्वस्सं मुंचदि । (पुरतः स्थित्वा) (ध) परिणामुप्पीडिदं विअ दाडिमफलं फुट्टणभूइट्ठं वट्ठदि मे हिअअं कोदूहलेन ता जधावुत्तमाचक्खंतो कज्जरहस्सेन संभावेदु मं पिअवअस्सो (२) ।

---

(१) अहो अहो अपूर्व इव प्राभातिकः पठनविधिः प्रियवयस्यस्य ।

(२) अहोऽस्य हृदयविक्षेपस्तत् किं नु खल्विदम् । भवतु अनुबन्धिष्ये । न खलु अपीडितः सहकारवृन्तग्रन्थिरपि रससर्वस्वं मुञ्चति । परिणामोत्पीडितमिव दाडिमफलं स्फुटनभूयिष्ठं वर्त्तते मे हृदयं कौतूहलेन तद्यथा वृत्तमाचक्षाणः कार्य्यरहस्येन सम्भावयतु मां प्रियवयस्यः ।

---

(थ) अपूर्वः पठनविधिः । प्रभाते वेदादिपाठस्यैव नियमात् रागनाट्यपाठस्य अपूर्वत्वमिति भावः ।

(द) हृदयविक्षेपः हृदयस्य अन्तरात्मनः विक्षेपः पराभवः अन्यासक्तता इति यावत् । अनुबन्धिष्ये अनुसरिष्यामि । अपीड़ितः अनिष्पीड़ित इत्यर्थः सहकारस्य आम्रस्य वृन्तमेव ग्रन्थिः रस एव सर्वस्वं सर्वधनं तत् ।

(ध) परिणामेण परिपाकेन उत्पीड़ितमिव उत्तेजितमिव स्फुटनभूयिष्ठं स्फुटितप्रायमित्यर्थः । यथावृत्तं यथोपस्थितं यथाघटित-

राजा। ( तदभिमुखमवलोक्य ) अये चारायण ! सखे ! कथं न कथयामि (न) सुहृत्सञ्चारितरहस्यं हि चेतः संविभक्तचिन्ताभारमिव लघूभवति।

विदूषकः। अवहिदोह्मि ( १ )।

राजा। जाने स्वप्नविधौ ममाद्य चुलुकोत्सेक्यं पुरस्तादभूत्
प्रत्यूषे परिवेषमण्डलमिव ज्योत्स्नासपत्नं महः।
तस्यान्तर्नखनिस्तुषीकृतशरच्चन्द्रप्रभैरङ्गकै-
र्दृष्टा काप्यबला बलात्कृतवती सा मान्मथं मन्मथम् ॥१५॥

विदूषकः। सुठ्ठु क्खु तुमं महिलालंपडो जदो जा सा तए मम्मदाजलत्तिसा दिठ्ठा कुवलअमाला णाम

---

( १ ) अवहितोऽस्मि।

---

मिति यावत् वृत्तं वृत्तान्तम् आचचक्षाणः कथयन् कार्य्यस्य रहस्येन रहस्याख्यानेन सम्भावयतु प्रीणयतु।

( न ) सुहृत्सञ्चारितरहस्यं सुहृदि सञ्चारितं संक्रामितं रहस्यं गूढ़ाभिलाषः यस्य तथाभूतं संविभक्तः चिन्तारूपो भावो यस्य तादृशमिव।

(१५) जाने इति। मया अद्य प्रत्यूषे स्वप्नविधौ स्वप्नदशायां परिवेषमण्डलमिव परिधिमण्डलमिव परिवेषस्तु परिधिरुपसूर्य्यकमण्डले इत्यमरः। ज्योत्स्नासपत्नं चन्द्रिकासदृशं यत् महः तेजः तस्य अन्तःस्थितेति शेषः कापि अनिर्वचनीयाकृतिः अबला नारी दृष्टा, सा नखैर्नखप्रभाभिरित्यर्थः निस्तुषीकृता निर्जिताः शरच्चन्द्रस्य प्रभा यैः तादृशैः अङ्गकैः मान्मथं मदनायत्तं मामिति शेषः मन्मथं यथा तथा बलात् कृतवती ततश्च पुरस्तात् चूलिका अञ्जलिः तया उत्सेक्यं परिषेचयितेति शेषः अभूत् अपतत् इत्यहं जाने इत्यन्वयः। शार्दूलविक्रीडितं वृत्तम्।

(प) जाव तम्मदं किं पि अणुसंधेमि ताव एसो अवरो गंडस्स उवरि पिण्डओ संवुत्तो हुं तदोतदो (१)।

राजा । ततश्च ।

आलिखितामिव चेत:फलकतलेऽस्मिन्विकल्पवर्तिकया ।
बालां स्मरचित्रगतां विलोक्य जातोऽस्मि तद्बन्दी ॥ १६ ॥

पुनस्तद्वक्त्रमित्यादि पठति ।

विदूषकः । तदो तदो ( २ )।

राजा । शृणु श्रवणामृतं, गण्डूषय मधु, पिब नयनामृतम्।
हारोऽयं केरलस्त्रीविहसितशुचिभिः पङ्क्तिभिर्मौक्तिकानां
सद्यः षाण्मासिकानां मम मदिरदृशा दत्तचन्द्रोदयश्रीः ।

---

( २ ) सुष्ठु खलु त्वं महिलालम्पटः यतो या सा त्वया नर्मदाजलो- र्मीणां दृष्टा कुवलयमाला नाम यावत्तद्गतं किमप्यनुसन्दधामि तावद्दैषोऽपरः गण्डस्योपरि पिण्डकः संवृत्तः हुं ततस्ततः ।

( ११ ) ततस्ततः ।

---

( प ) यावत् तद्गतं तद्गोचरं किमपि स्वल्पं तत्प्राप्त्युपाय- मित्यर्थः । गण्डस्य रोगविशेषस्य पिण्डकः अपरो रोगविशेष इत्यर्थः ।

( १६ ) आलिखितामिति । अस्मिन् चेत एव फलकं तस्य तले विकल्पवर्त्तिकया कल्पनातूलिकया आलिखितां चित्रितामिव स्मरचित्र- गतां कामचित्तस्थितां तां बालां विलोक्य तस्या बन्दी जातोऽस्मी- त्यन्वयः । आर्य्या जातिः, यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीये- ऽपि । अष्टादश द्वितीये पञ्चदश चतुर्थके आर्य्येति लक्षणात् । उत्प्रे- क्षालङ्कारः तदुक्तं दर्पणे । भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति ।

( १७ ) हार इति । मदिरदृशा तया मम कण्ठदेशात् कण्ठदेशं

सोत्कण्ठं कण्ठदेशाज्झटिति कुचतटाद्यो नमो मन्मथाये-
त्यस्तो यन्मध्यरत्नं छुरयति ककुभः कौङ्कुमीभिः प्रभाभिः ।१७॥

विदुषकः । यज्ञोपवीतं (क) परिमृश्य) सुत्तरज्जु-
हारस्स मे महाबम्हणस्स भणिदेण सच्चओ सिविणओ भोदु ।
( स्वगतम् ) । अहो हदास दासीए पुत्त ! सिविणइंदजा-
लिअ ! जाणासि महामदीणं पि विब्भमं कादुं । (प्रका-
शम् )तदो तदो (१) ।

(१) सूत्ररज्जुहारस्य मे महाब्राह्मणस्य भणितेन सत्यः स्वप्नो भवतु । अहो हताश दास्याः पुत्र ! स्वप्नेन्द्रजालिक ! जानासि महामतीनामपि विभ्रमं कर्तुम् । ततस्ततः ।

व्याप्य यत्रार्थे पञ्चमी, वीरवल्लीणां विहसितान्येव शुचयः निर्मला विशुद्धा वा ताभिः मासमासिकानां पक्षमासोत्पन्नानाम् अभिनवानामित्यर्थः मौक्तिकानां पङ्क्तिभिः दत्ता चन्द्रोदयस्य श्रीर्यस्मै तादृशः तथा यस्य मध्यरत्नं कौङ्कुमीभिः कुङ्कुमसदृशीभिः प्रभाभिः ककुभः दिशः छुरयति व्याप्नोति सोऽयं हारः सद्यः कुचतटात् सोत्कण्ठं साभिलाषम् ओं नमो मन्मथाय इति उच्चार्य्य इति शेषः झटिति अस्तः विक्षिप्तः अर्पित इति यावत् । स्रग्धरावृत्तम् ।

(क) परिमृश्य स्पृष्ट्वा सूत्ररज्जुहारस्य सूत्रा रज्जव एव हारा मालिकाः यस्य तादृशस्य महाब्राह्मणस्य श्रेष्ठब्राह्मणस्य अथच ब्राह्मणाधमस्य शङ्खे तैले तथा मांसे गोष्ठे ज्योतिषिके द्विजे । यात्रायां पथि निद्रायां महान् शब्दो न दीयते इति निषेधादिव्यञ्जकतया तत्तच्छब्देभ्यः प्राक् महच्छब्दस्य ग्रहणनिषेधात् । भणितेन आशीर्वादवचसा इत्यर्थः । विभ्रमं विशेषेण भ्रान्तिं व्याकुलतामित्यर्थः ।

राजा । ततश्च—

कथय किमिह बाले ! का त्वमित्युल्लपंस्तां
झटिति किल दुकूलस्याञ्चले धारयामि ।
अगमदथ निकेतात् क्वाप्यसौ सारयन्ती
नवकुवलयमालामांसलैर्दृष्टिपातैः ॥ १८ ॥

विदूषकः । अध ब एकपल्लंकगदाए देवीए किं प्रडिवस्सं ?(१)

राजा । अत्रान्तरे तरलहारलतानितम्बा
संवाहनस्खलनवेगतरङ्गिताङ्गी ।
देवी व्यपास्य शयनं धृतमानतन्तु-
रन्तःपुराद् गतवती सह सौविदल्लैः ॥ १९ ॥

---

(१) अथ एकपर्यङ्कगतया देव्या किं प्रतिपन्नम् ?

---

(१८) कथयेति । हे बाले ! इह अस्मिन् स्थाने त्वं किं कथम् आगतेति शेषः । का त्वं ? कथय इति उल्लपन् वदन् झटिति तां दुकूलस्य वसनस्य अञ्चले धारयामि । अथ असौ नवकुवलयमालामांसलैः नवीननीलोत्पलश्रेणिसदृशैः दृष्टिपातैः सारयन्ती व्यथयन्ती मामिति शेषः निकेतात् वासभवनात् क्वापि अगमत् । मालिनीवृत्तम् ।

(ब) एकपर्य्यङ्कगतया एकपल्यङ्कस्थितया । प्रतिपन्नं कृतम् ।

(१९) अत्रेति । अत्र अन्तरे अवकाशे तरलः चञ्चलः यः हारः स एव लता नितम्बे यस्याः तयोक्ता संवाहने सम्यक् स्वप्रलब्धया धारणे स्खलने रेतःपतने च यो वेगः चापल्यं तेन तरङ्गितं कम्पितम् अङ्गं यस्याः तादृशी अत एव धृतः मान एव तन्तुः सूत्रं यया तथाभूता मानवतीत्यर्थः शयनं व्यपास्य विहाय सौविदल्लैः कञ्चुकिभिः सौविदल्लाः कञ्चुकिन इत्यमरः । सह अन्तःपुरात् गतवती । वसन्ततिलकं वृत्तम् ।

विदूषकः। (भ) अहो! ते नागरत्तणं किं तए पुरदो भवीअ णाणुणीदा केच्चिरं वा चंदे पसारिदकरे अविकसिदकमला णीलुप्पलिणी चिठ्ठदि। (१)

राजा। (सखेदस्मितम्) (म) तदनुध्यानपरतन्त्रचेतसा धारयितुं न पारिता किं पुनरनुनेतुम्।

विदूषकः। सच्चकं तए किदे णडे दिठ्ठे मुंडिदे उवविठ्ठो पई मुंडिदो त्ति। (२)

राजा। (सखेदस्मितम्) (य) भगवत्याशे! सत्यमप्रतिहतासि। ननु विचारय चिरम्।

---

(१) अहो! ते नागरत्वं किं तया पुरतो भूत्वा नानुनीता? कियच्चिरं वा चन्द्रे प्रसारितकरे अविकसितकमला नीलोत्पलिनी तिष्ठति?

(२) सत्यं, त्वया कृतं—'नटे दृष्टे मुण्डिते उपविष्टः पतिर्मुण्डितः' इति।

---

(भ) अहो! ते नागरत्वं तव नागरत्वं विलासित्वं वैदग्ध्यमिति यावत् आश्चर्यमित्यर्थः त्वया पुरतो भूत्वा किं कथम् असौ न अनुनीता? वैदग्ध्येन अनुनयचातुर्यस्य तव विदितत्वादिति भावः। प्रसारितकरे प्रसारितः करः किरणः हस्तश्च येन तादृशे।

(म) तदनुध्यानपरतन्त्रचेतसा तस्याः अप्रदृष्टायाः यत् अनुध्यानं चिन्तनं तत्परतन्त्रं तदधीनं चेतः यस्य तादृशेन मया इति शेषः।

(य) भगवति सर्वशक्तिमति। अप्रतिहता केनापि प्रतिहन्तुमशक्या इत्यर्थः।

क्व पातव्या ज्योत्स्नामृतभुवनगर्भाऽपि तृषितै-
र्मृणालीतन्तुभ्यः सिचयरचना कुत्र भवतु ।
क्व वाऽपारो मेयो बत बकुलदाम्नां परिमलः
कथं स्वप्नः साक्षात् कुवलयदृशं कल्पयतु ताम् ॥ २० ॥

( स्मृतिमभिनीय हृदयदेशमवलोक्य च )

स्वप्नः किमेष ? किमु संविदियं च साक्षाज्- ?
ज्ञानं किमेतदुभयात्मकमन्यदेव ?
यद्दृश्यते न खलु सा तरलायताक्षी
कण्ठप्रदेशमधिरोहति चैष हारः ॥ २१ ॥

---

( २० ) क्वेति । तृषितैः पिपासुभिः अमृतं भुवनगर्भे जगदभ्यन्तरे यस्याः तादृशी अपि सर्वत्र सुलभापीत्यर्थः ज्योत्स्ना चन्द्रिका क्व कुत्र पातव्या ? न कुत्रापि पातुं शक्या इत्यर्थः । कुत्र वा मृणालीतन्तुभ्यः विसस्त्रेभ्यः सिचयरचना वस्त्रवयनं भवतु न कुत्रापीत्यर्थः । बकुलदाम्नां केशरमालिकानाम् अपारः अशेषः परिमलः सौरभं क्व वा मेयः परिच्छेत्तुं शक्यः । बतेति खेदसूचकमव्ययम् । स्वप्नश्च कुवलयदृशं नीलोत्पलाक्षीं तां कथं साक्षात् कल्पयतु कल्पयितुं शक्नोतु न कथमपीत्यर्थः । तृषितानां ज्योत्स्नापानमिव मृणालसूत्रेभ्यः वस्त्रवयनमिव बकुलमालानां परिमलातिरेकपरिच्छेद इव स्वप्नच्छायया नायिकाया स्तथापरिकल्पनमसम्भावीति भावः । दृष्टान्तालङ्कारोऽयं, तदुक्तं दर्पणे । दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् इति । शिखरिणीवृत्तं, रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति लक्षणात् ।

(२१) स्वप्न इति । एषः तादृगलौकिकरूपराशिसन्दर्शनरूपः स्वप्नः निद्रावेशविजृम्भितः किम् ? किमु इयं तादृशालौकिकरूपसन्दर्शनरूपा साक्षात् संवित् प्रत्यक्षज्ञानम् ? अथवा एतत् उभयात्मकं स्वप्नप्रत्यक्षज्ञानमयम् अन्यत् अपरं ज्ञानमेव किम् ? यत् यस्मात् सा तरलाक्षी

विदूषकः । मण्णे ( २ ) णिसारंभपिणद्धेण णिअहारेण विप्पलद्धोसि । ( १ )

राजा । ( मदनानुकूलमभिनीय )

वाणान् संहर मुञ्च कार्मुकलतां लक्ष्यं तव त्र्यम्बकः
के नामात्र वयं ? शिरीषकलिकाकल्पं यदीयं मनः ।
तत्कारुण्यपरिग्रहात् कुरु दयामस्मिन्विधेये जने
स्वामिन् ! मन्मथ ! तादृशं पुनरपि स्वप्नाद्भुतं दर्शय ॥२२

( १ ) मन्ये निशारम्भपिनद्धेन निजहारेण विप्रलब्धोऽसि ।

---

चञ्चलनयना न खलु दृश्यते एतेन, ज्ञानैकदेशस्य स्वप्नमयत्वमिति भावः । एष च तदारोपित इत्यर्थः हारः कण्ठप्रदेशमधिरोहति च एतेन ज्ञानापरदेशस्य प्रात्यक्षिकत्वमिति भावः । यद्येष स्वप्नः तदा कथं कण्ठे मम हारार्पणं यदि च साक्षात् संवित् तदा कथं तस्या अपूर्वदर्शनमिति उभयात्मकं ज्ञानस्येति तात्पर्य्यार्थः । वसन्ततिलकं वृत्तम् ।

( २ ) निशारम्भपिनद्धेन निशायाः आरम्भे प्रथमरात्रे पिनद्धेन परिहितेन कुतश्चित् व्यासङ्गात् विस्मृतेनेति भावः, विप्रलब्धः प्रतारितः भ्रममापादित इत्यर्थः ।

( २२ ) वाणानिति । हे स्वामिन् प्रभो मन्मथ ! मदन ! वाणान् मत्प्रहारार्थं संहितानिति भावः, संहर तूणेषु स्थापय, कार्मुकलतां धनुः मुञ्च त्यज तव लक्ष्यं शरव्यं त्र्यम्बकः शिवः यदीयं येषामस्माकम् इदं मनः शिरीषकलिकाकल्पं शिरीषकुसुमकलिकासदृशम् अतिकोमलमित्यर्थः ते वयं के ? तादृशदुर्जयविरूपाक्षलक्ष्यस्य भवतः अतिक्षीणजीविषु अस्मद्विधेषु प्रयासोऽकिञ्चित्कर इति भावः । तत् तस्मात् कारुण्यस्य परिग्रहात् अस्मिन् विधेये वश्ये जने दयां कुरु, न प्रहर इति भावः, प्रत्युत पुनरपि स्वप्ने तादृशम् अद्भुतम् आश्चर्यरूपं दर्शय । शार्दूलविक्रीडितं वृत्तम् ।

विदूषकः । एसो सो तुमं सिविणअलद्धेहिं मोदएहिं गामं उवणिमंतेसि ता एहि गच्छअ देवीं पसादेह्म (ल)। वरं तक्कालोपगदा तित्तिरी ण उण दिअसंतरिदा मोरी । (१)

राजा । यदभिरुचितं भवते ।

विदूषकः । पणअपणमंतसामंतसहस्सकुलमथ्थाणीमंडवमग्गमुज्झिअ (व) इमिणा खिडक्किआदुवारेण मअरंदुज्जाणमाविसीअ गच्छह्म (२)। तथा कुरुतः ।

नेपथ्ये। सुखाय वसन्तावतारो भवतु देवस्य। संप्रति हि —
गर्भग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवाः
वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः ।

---

(१) एष स त्वं स्वप्नलब्धैर्मोदकैर्ग्राममुपनिमन्त्रयसि ? तदेहि गत्वा देवीं प्रसादयावः । वरं तत्कालोपगता तित्तिरी न पुनर्दिवसान्तरिता मयूरी ।
(२) प्रणयप्रणमत्सामन्तसहस्रकुलमास्थानीमण्डपमार्गमुज्झित्य अनेनापवरकद्वारेण मकरन्दोद्यानमाविश्य गच्छावः ।

---

(ल) स्वप्नलब्धैरलीकैरित्यर्थः । य.सं ग्रामवासिसर्वजनमुपनिमन्त्रयसि तानेव भोजयितुम् आह्वयसि एवं त्वां व्याकुलं ज्ञात्वा श्रुत्वा च सर्वं वृत्तान्तं त्वां क्षिप्तमिव मंस्यन्ते इति भावः । तत्कालोपगता चिन्तिताधिगता तित्तिरी पक्षिणीविशेषः दिवसान्तरिता दिनान्तरव्यवहिता असुलभा इत्यर्थः ।

(व) प्रणयेन प्रकृष्टेन नयेन प्रणमतां सामन्तानाम् अधीनन्टपाणां सहस्रैः सङ्कुलं व्याप्तम् । उज्झित्वा त्यक्त्वा ।

(२१) गर्भग्रन्थिष्विति । वीरुधां लतानां गर्भग्रन्थिषु ग्रन्थ्यभ्यन्तरेषु सुमनसः पुष्पाणि, तथा मध्ये अङ्कुरं पल्लवाश्च दृश्यन्ते इति शेषः ।

किञ्च त्रीणि जगन्ति जिष्णु दिवसैर्द्वित्रैर्मनोजन्मनो
देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनुः॥ २३॥
सपदि सखीभिर्निभृतं विरहवतीस्त्रातुमत्र भुज्यन्ते।
सहकारमञ्जरीणां शिखोद्गमग्रन्थयः प्रथमे॥ २४॥

राजा। अये! सुरभिसमयारम्भः सैवेयं मन्मथशैत्यसामग्री।

विदूषकः। बंदिवअणसूयमाणसिसुभावो उअवणदीसंतथ्थोअविथ्थारो सुरभिसमयारंभो त्ति किं णेदमणवरदसारणीसेअसुकुमारासु केलिवणवसुंधरासु अधिकविथ्थारो सुरभिसमयारंभः (अ) (१)।

---

(१) वन्दिवचनश्रूयमाणशिशुभाव उपवनदृश्यमानस्तोकविस्तारः सुरभिसमयारम्भ इति किं नेदमनवरतसारणीसेकसुकुमारासु केलिवनवसुन्धरासु अधिकविस्तारी सुरभिसमयारम्भः।

---

किञ्च पिकानां या वध्वः तासां कण्ठोदरे कण्ठाभ्यन्तरे पञ्चमः स्वरविशेषः वाञ्छामात्रेण परिग्रही यस्य तादृशः प्रकाशोन्मुख इत्यर्थः तिष्ठति। तथा देवस्य मनोजन्मनः कामस्य चिरोज्झितं यदि चिरत्यक्तमपीत्यर्थः अभ्यासवश्यम् अनवरतव्यापारेण वशं गतं धनुरपि द्वित्रैर्दिवसैः त्रीणि जगन्ति जिष्णु भवेत्। शार्दूलविक्रीडितं वृत्तम्।

(२४) सपदीति। अत्र वसन्तागमे सखीभिः सहचरीभिः विरहवतीः नायिकाः प्रोषितभर्तृका इत्यर्थः त्रातुं रक्षितुं सहकारमञ्जरीणां प्रथमे शिखोद्गमग्रन्थयः सपदि शीघ्रं निभृतं ताभिरलक्षितञ्च यथा तथा भुज्यन्ते व्यवह्रियन्ते।

(अ) वन्दिवचनश्रूयमाणशिशुभावः वन्दिनां वैतालिकानां वचनेन वर्णनेन श्रूयमाणः शिशुभावः शैशवं प्रारम्भ इत्यर्थः यस्य तथोक्तः वन्दिनं वसन्तमधिकृत्य राजस्तुतेरारम्भादिति भावः। उपवनदृश्यमानस्तोकविस्तारः उपवनदृश्यमानः स्तोकः अल्पः विस्तारो यस्य

राजा । ततश्च ।

सास्यं सम्प्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकैः
वाह्लीकीदशनच्छटारुणतरैः पत्त्रैरशोकैश्चितः ।
भृङ्गालङ्कितकोटिकिंशुकमिदं किंचिद्विवृन्तायते
माञ्जिष्ठस्तवकैश्च पाटलितरोरन्यैव काचिल्लिपिः ॥ २५ ॥

( विचिन्त्य )

विदूषकः । कलमंकूरकुषंडपांडरेसुं सितसिंदुवारपुप्फेसुं तक्कालकिदमंजिठ्ठेसुं असोअपल्लवेसुं णिज्जिदमंजिठ्ठाधूसरिदमणहरेसुं (ष) माहवीकुसुमेसुं दधिसरिच्छेसुं

---

तथाभूतः । अनवरतसारणीसेकसुकुमारासु अनवरतः सारणी सेचनी तस्याः सेकः तेन सुकुमारासु कोमलासु केलिवनवसुन्धरासु क्रीडावनभूमिषु । सुरभिसमयारम्भः वसन्ताविर्भावः ।

( २५ ) सास्यमिति । सम्प्रति वसन्ताविर्भावसमये विचकिलं मदनाख्यतरुकुसुमं षाण्मासिकैः षण्मासोत्पन्नैः प्रौढैरित्यर्थः मौक्तिकैः सास्यं सादृश्यं सेवते लभते । अशोकः वाह्लीकीनां दशनच्छटारुणतरैः दन्तावलीसदृशालोहितैः पत्त्रैः चितः व्याप्तः । इदं किञ्चित् किंशुकं पलाशं भृङ्गेण लाञ्छिता कोटिरग्रं यस्य तथोक्तम् अत एव विवृन्तायते विशिष्टवृन्तयुक्तमिव आभाति पलाशवृन्तस्य श्यामत्वात् अग्रस्थितभृङ्गस्य तथात्वेन अग्रे पश्चाच्च सवृन्तमिव लक्ष्यते इति भावः । तथा पाटलितरोः तदाख्यवृक्षस्य माञ्जिष्ठस्तवकैः रक्तवर्णपुष्पगुच्छैः अन्यैव अपूर्वैव काचित् लिपिः रचना दृश्यते इति शेषः । शार्दूलविक्रीडितं वृत्तम् ।

( ष ) तस्मिन् काले वसन्तप्रादुर्भावसमये कृतः जनितः मञ्जिष्ठारागः येषां तादृशेषु । निर्जितमञ्जिष्ठाधूसरितमनोहरेषु निर्जिता मञ्जिष्ठा यैः ताहशानि आधूसरितानि मनोहराणि च तथोक्तेषु ।

णोमालिआमुउलेसुं दरावड्ढिददुद्धमुद्धेसुं विचइल्लपुप्फेसुं णीसेसकुसुमसंपदं वज्जीअ भममाणा संसज्जदि मे दिट्ठी (१)

राजा । अत्र हि किलोचितोपमाननिवेदिनी (ख) ते जिह्वा ।

विदूषकः । (अग्रतो निर्दिश्य) । रंगंगणं (ह) लदाणच्चकीणं बाहाअली मलआणिलतुरंगस्स पारद्धिरण्णं मम्महवाहस्स संकेदसदणं णीसेसकुसुमाणं पीऊसवरिसी हिअअस्स पमदुज्जाणं ताइमं निव्वण्णअंतो इदो एदु पिअवअस्सो ( २ ) ।

---

( १ ) कुङ्कुमाङ्कुरकुड्मलपाण्डरेषु सितसिन्दुवारपुष्पेषु तत्क्षणकृत-माञ्जिष्ठेषु अशोकपल्लवेषु निर्जितमञ्जिष्ठाधूसरितमनोहरेषु माधवी-कुसुमेषु दधिसदृक्षेषु नवमालिकामुकुलेषु दरावर्धितदुग्धमुग्धेषु विचकिलपुष्पेषु निःशेषकुसुमसंपदं वर्जयित्वा भ्रममाणा संसज्जते मे दृष्टिः ।

( २ ) रङ्गाङ्गणं लता नर्तकीनां बाह्याली मलयानिलतुरङ्गस्य पापर्द्धि-रण्यं मन्मथव्याधस्य सङ्केतसदनं निःशेषकुसुमानां पीयूषवर्षी हृदयस्य प्रमदोद्यानं तदेतन्निर्वर्णयन् इत एतु प्रियवयस्यः ।

---

दधिसदृक्षेषु दधितुल्येषु । दरावर्द्धितदुग्धमुग्धेषु ईषदावर्द्धितानि ईषद्वृद्धिं गतानि अत एव दुग्धवत् मुग्धानि मनोज्ञानि तेषु विचकिलपुष्पेषु विचकिलानां मदनतरूणां कुसुमेषु । निःशेषाणाम् अशेषाणां कुसुमानां सम्पदं समृद्धिं वर्जयित्वा त्यक्त्वा भ्रममाणा भ्रमन्ती मे दृष्टिः संसज्जते संलगति दधिप्रियत्वात् तत्सदृशेष्वेव रागो न तु रक्तकुसुमादिषु इति भावः ।

( ख ) उचितोपमाननिवेदिनी उचितम् उपयुक्तम् उपमानं दध्युपमितमिति भावः निवेदयतीति तथोक्ता ।

( ह ) रङ्गाङ्गनं लतानर्त्तकीनां लता एव नर्त्तक्यः तासां

राजा । ( पवनस्पर्शमभिनीय ) ।

ये दोलाकेलिकाराः किमपि मृगदृशां मानतन्तुच्छिदो ये,
सद्यः शृङ्गारदीक्षाव्यतिकरगुरवो ये च लोकत्रयेऽपि ।
ते कण्ठे लोड़यन्तः परभृतवयसां पञ्चमं रागराजं
वान्ति स्वैरं समीराः स्मरविजयमहासाक्षिणो दाक्षिणात्याः२७
अपिच, सुरतभरखिन्नपन्नगविलासिनीपानकेलिजर्जरितः ।
पुनरपि विरहिश्वासैर्मलयमरुन्मांसलीक्रियते ॥ २८ ॥

---

रङ्गाङ्गनं नृत्यक्षेत्रं मलयानिलतुरङ्गस्य वाह्याली वहिःप्रदेशः । मन्मथ एव व्याधः तस्य पापर्द्धीनां पापाचाराणाम् अरण्यं निःशेषाणां कुसुमानां सङ्केतसदनं सङ्केतस्थानम् । पीयूषम् अमृतं वर्षतीति तथोक्तम् अमृतवदानन्दजनकमित्यर्थः । निर्वर्णयन् अवलोकयन् ।

(२७) ये इति । ये दोलया दोलनेन यः केलिः क्रीड़नं तं कारयन्तीति तथोक्ताः, वायुसेवनार्थं विलासिनः दोलया क्रीड़न्तीति प्रसिद्धिः । किमपि किञ्च मृगदृशां मानिनीनामिति शेषः मान एव तन्तुः सूत्रं तं छिन्दन्तीति तथाभूताः । ये च लोकत्रयेऽपि सद्यः वहनमात्रेणेत्यर्थः शृङ्गारदीक्षाव्यतिकरगुरवः शृङ्गारेषु या दीक्षा तस्या व्यतिकरश्चेष्टाविशेषः तस्य गुरवः उपदेष्टारः शृङ्गारचेष्टाप्रवर्त्तका इत्यर्थः ते स्मरविजयमहासाक्षिणः दाक्षिणात्याः समीराः वायवः परभृतवयसां कोकिलपक्षिणां कण्ठे पञ्चमं रागराजं स्वरविशेषं लोड़यन्तः संक्रामयन्तः सन्तः स्वैरं मन्दं वान्ति वहन्ति । स्रग्धरावृत्तं, म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति लक्षणात् ।

(२८) सुरतेति । सुरतस्य निधुवनस्य भरेण आतिशय्येन खिन्नानां पन्नगविलासिनीनां भुजङ्गरमणीनां पाने यः केलिः तेन जर्जरितः मन्दीकृतः अपि पुनः विरहिणां श्वासैः दीर्घनिश्वासैः मांसलीक्रियते परिपुष्यते वृद्धिं प्राप्यते इत्यर्थः । आर्य्याजातिरियम् । यस्याः पादे

विदूषकः। एवं णेदं।

लंकातोरणमालिआतरलणो माणोसहं सिंघली-
संगाणं दविडीण मम्महमहालासेकणट्टावओ।
कसाडीचिउराण तंडवअरो लाटीण लीलागुरू
उम्मत्तो मरहट्टि लुंडिदमणो चेताणिलो णच्चदि ॥२८॥

(संस्कृतमाश्रित्य)

इह हि नववसन्ते मञ्जरीरेणुपुञ्ज-
च्छुरणधवलदेहाबद्धहेलं सरन्ति।

---

(२८) एवमेतत्।

लङ्कातोरणमालिकातरलनो मानौषधं सिंहली
संघानां द्राविड़ीनां मन्मथमहालास्यैकनर्त्तकः।
कर्णाटीचिकुराणां ताण्डवकरो लाटीनां लीलागुरु-
रुन्मत्तो महाराष्ट्रीलुण्ठितमनाः चैत्रानिलो नृत्यति ॥

---

प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्येति लक्षणात्।

(२८) लङ्केति। लङ्कायास्तोरणस्य बहिर्द्वारस्य या मालिका स्रक् तस्याः तरलनः कम्पनः सिंहलीसङ्घानां लङ्काङ्गनानां मानस्य प्रणय-कोपस्य औषधम् अपनेता इत्यर्थः उद्दीपकत्वादिति भावः द्राविड़ीनां द्राविड़देशाङ्गनानां मन्मथस्य यत् महालास्यं महानर्त्तनं महोत्सव इत्यर्थः तस्य वर्त्तापकः उत्तेजकः कर्णाटीनां कर्णाटदेशमहिलानां ये चिकुराः कुन्तलाः तेषां ताण्डवकरः नाट्यकारकः लाटीनां लाटदेश-वनितानां लीलागुरुः विलासशिक्षकः महाराष्ट्रीणां लुण्ठितं मादितं मनो येन तादृशः तथा उन्मत्तः उन्मादकारकः अन्तर्भूतण्यर्थोऽयं मदधातुः। चैत्रानिलः वसन्तवायुः नृत्यति नटवत् विचरति।

(३०) इह हीति। इह अस्मिन् नववसन्ते हारिणः मनोहारिणः

तरलमलिसमूहा हारिहुङ्कारिकण्ठा
बहुलपरिमलाली सिन्दुरं सिन्दुवारम् ॥ ३० ॥

राजा। (किञ्चिद्विहस्य)। संस्कृतेऽपि प्रगल्भसे (क)।

विदूषकः। तुमं पि अह्मारिसजणजोग्गे पाउदमग्गे पउत्तोसि। ता एहि महामंतिकारिदं फटिहसिलामंदिरं केलिकैलासं (ख) पेक्खिदुं गच्छह्म (१) (इति परिक्रामतः)। कहिं उण कोंचीकेंकारसुन्दरो (ग) सद्दो सुणीअदि (२)।

राजा। (समाकर्णयंस्तदनुसारेणोर्ध्वमवलोक्य)

---

(१) त्वमपि अस्मादृशजनयोग्ये प्राकृतमार्गे प्रवृत्तोऽसि। तदेहि महामन्त्रिकारितं स्फटिकशिलामन्दिरं केलिकैलासं प्रेक्षितुं गच्छावः।

(२) कुत्र पुनः क्रौञ्चीक्रेङ्कारसुन्दरः शब्दः श्रूयते।

---

झङ्कारिणः झङ्कारवन्तः कण्ठाः येषां तथोक्ताः तथा मञ्जरीणां कुसुमवल्लरीणां रेणुपुञ्जैः परागसङ्घैः यत् स्फुरणं व्यापनं तेन धवलः श्वेतः देहः येषां तथाभूताः अलिसमूहाः बहुहेलं कृतावज्ञं यथा तथा भोग्यवस्तूनां प्राचुर्यादिति भावः तरलम् अनिलकम्पितं बहुला परिमलानाम् आली यस्य तादृशं सिन्दुरं विकस्वरं सिन्दुवारं पुष्पविशेषं सरन्ति गच्छन्ति। मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणात्।

(क) प्रगल्भसे वाचालयसि।

(ख) प्राकृतमार्गे प्राकृतपद्धतौ प्राकृतभाषायामिति यावत्। केलिकैलासं केलौ क्रीड़ायां कैलास इव इति तथोक्तम्।

(ग) क्रौञ्चीक्रेङ्कारसुन्दरः, क्रौञ्च्या बकपक्षिण्याः क्रेङ्कार इव सुन्दरः मनोज्ञः।

उपप्राकाराग्रं प्रहिणु नयने तर्कय मनाक्-
अनाकाशे कोऽयं गलितहरिणः शीतकिरणः।
सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां
किरन् ज्योत्स्नामच्छां लवलिफलपाकप्रणयिनीम् ॥२१॥

विदूषकः। भो वअस्स ! कहिं सो (१)।

राजा। अयमयं (सविस्मयमवलोक्य) कथं न दृश्यते किं पुनरिदम्। (वितर्क्य)

यन्मञ्जुशिञ्जितमितो रशनामणीनां
यच्छ्वाससौरभबलादलयो वदन्ति।

---

(१) भो वयस्य ! कुत्र सः।

---

(२१) उपेति। उपप्राकाराग्रं प्राकारशिखरसमीपे नयने प्रहिणु प्रेरय दृष्टिं कुरु इत्यर्थः मनाक् ईषत् तर्कय विवेचय, अनाकाशे अनन्तरीक्षे गलितहरिणः मृगरहितः अकलङ्क इत्यर्थः सुधायां बद्धा ग्रासा यैः तादृशैः सुधापानार्थिभिरित्यर्थः उपवनचकोरैः उपवनविशेषणात् चकोराणां सुशीलत्वं व्यज्यते अनुसृतां पिपासितामित्यर्थः लवलिफलानां पाकस्य प्रणयिनीम् अनुकारिणीं परिणतलवलिफलसदृशीम् अच्छां निर्मलां ज्योत्स्नां चन्द्रिकां किरन् वर्षन् कोऽयं शीतकिरणः ? अत्र निगीर्णस्वरूपे अनुपाति नायिकायाः वदने नयने च चन्द्रचकोररूपेणाध्यवसायात् भेदेऽप्यभेदरूपातिशयोक्तिः। तदुक्तं दर्पणे। सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते। भेदेऽप्यभेदः सम्बन्धे सम्बन्धस्तद्विपर्ययौ। पौर्वापर्यात्ययः कार्यहेत्वोः सा पञ्चधा ततः इति। शिखरिणीवृत्तं, रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणीति लक्षणात्।

(२२) यदिति। यत् यस्मात् इतः अस्यां दिशि रशनामणीनां काञ्चीरत्नानां मञ्जु मनोज्ञं शिञ्जितं ध्वनिः भूषणानान्तु शिञ्जित-

यद्गीतयः स्खलदलङ्कृतयश्च लीला-

दोलाविलासतरलस्तदयं मुखेन्दुः ॥ ३२ ॥

विदूषकः । सच्चकं तुए जाणिदं जदो हिंदोलदंडिआसिहराइं (घ) इदो दीसंति (१)।

राजा। (पुनर्दृष्ट्वा) सखे! अयमसावाश्चर्यचन्द्रमाः।

विदूषकः। कधं लुक्कदंसणिआहिं (ङ) विअ अह्मे हिं समं खेलदि चंदो (२)।

राजा। सखे! दिष्ट्या वर्धसे स्वप्नदृष्टजनमुखपद्मसंवादिनी लावण्यलक्ष्मीः।

---

(१) सत्यं त्वया ज्ञातं यतो हिन्दोलादण्डिकाशिखराणि इतो दृश्यन्ते।

(२) कथं लुप्तदर्शनैरिवास्माभिः समं खेलति चन्द्रः।

---

मित्यमरः। वर्त्तते इति शेषः। यत् यस्मात् श्वासस्य निश्वासमारुतस्य यत् सौरभं तस्य बलात् अतिरेकात् अलयः वदन्ति धावन्तीत्यर्थः, यस्य स्खलन्त्यः कणन्त्यः अलङ्कृतयः अलङ्कारा यासु ताः गीतयः सङ्गीतानि च श्रूयन्ते इति शेषः, तत् तस्मात् अयं लीलायै या दोला क्रीड़ादोलनं तस्या विलासैः व्यापारविशेषैः तरलः चपलः मुखेन्दुः वदनचन्द्रः न तु प्रकृतश्चन्द्र इत्यर्थः। वसन्ततिलकं वृत्तम्। ज्ञेयं वसन्ततिलकं तभजा जगौ ग इति लक्षणात्।

(घ) हिन्दोलादण्डिकाशिखराणि हिन्दोलाया दोलायन्त्रस्य या दण्डिकाः अवलम्बनदारुविशेषाः तासां शिखराणि अग्राणि।

(ङ) लुप्तं तिरोहितं न दत्तमिति यावत् दर्शनं येभ्यः तादृशैः अस्माभ्यं दर्शनम् अदत्त्वा कथं क्रीड़तीत्यर्थः।

विदूषकः। कीदिसी सा (१)।

राजा। यादृशी परिपाकपाण्डुराणां शरकाण्डानाम् (च)।

विदूषकः। करिकलभदन्तच्छेदेसु वि सा अत्थि ज्जेव। (विचिन्त्य) विरमिदहिन्दोलसद्देण जाणिज्जदि उत्तिस्सा सा। ता एहि अग्गतो गच्छह्म (२)। (इति परिक्रामतः) इदं तं केलिकेलासं। ता पविसीअदु (३)। (तथा कुरुतः)।

राजा। उद्दण्डडिण्डीरपिण्डपरिपाण्डुरेण (छ) महसा महाकैलासमेवेदम्।

विदूषकः। इदो दाव (ज) ललिअफटिहगब्भभवणभित्तिचित्तसंठेसु कम्मेसु णिवेसीअदु दिट्ठी। एस दाव

---

(१) कीदृशी सा।

(२) करिकलभदन्तच्छेदेष्वपि साऽस्त्येव। विरमितहिन्दोलाशब्देन ज्ञायते उत्तीर्णा सा तदेहि अग्रतो गच्छावः।

(३) इदं तत् केलिकैलासं तत् प्रविश्यताम्।

---

(च) परिपाकेति। परिपाकेण पाण्डुराणां धवलानां शरकाण्डानां शराख्यतृणानां यादृशी लावण्यलक्ष्मीः लावण्यकान्तिः तादृशी अस्या आश्चर्यचन्द्रमय इत्यर्थः।

(छ) उद्दण्डेति। उद्दण्डः महान् यः डिण्डीरः फेनः तस्य पिण्डवत् परिपाण्डुरेण महसा तेजसा।

(ज) ललितेति। ललितानि सुन्दराणि ललितं तेषु सुन्दरमित्यर्थः यानि गर्भभवनानि अन्तर्वेश्मानि तेषां भित्तिषु यानि चित्राणि आलेख्यानि तेषु स्थितेषु कर्मसु रचनाविशेषेषु इत्यर्थः।

देवो देवीए समं पासआहिणिवेसी आलिहिदो। एसा वि तंवुलकरंडवाहिणी णाअवल्ली। एसा चामरग्गाहिणी पभंजणिआ। एसो रअणकरंडओ णाम वामणओ। एसो उण मंदुरामक्कटो टप्परकण्णो णाम (१)।

राजा। सखे! त्वमेषोऽभिलिखितः।

विदूषकः। (सक्रोधम्) णाहं लिहिदुं जाणिदो बह्मणी जाणादि जादिसो हं सा मां भणादि तुमं पच्च-क्खको देवो त्ति (२)।

राजा। किमुपवने शुको वदति।

विदूषकः। किं विअ (३)।

राजा। अस्ति भवान् देवः किं पुनर्भृङ्गरिटिः (क)।

---

(१) इतस्तावज्ज्वलितस्फटिकगर्भभवनभित्तिचित्रसंस्थेषु कर्मसु निवेश्यतां दृष्टिः। एष तावद्देवो देव्या समं पाशकाभिनिवेशी आलिखितः, एषाऽपि ताम्बूलकरण्डवाहिनी नागवल्ली। एषा चामरग्राहिणी प्रभञ्जनिका। एष रत्नकरण्डको नाम वामनकः। एष पुनर्मन्दुरामर्कटः टप्परकर्णो नाम।

(२) नाहं लिखितुं ज्ञातो ब्राह्मणी जानाति यादृशोऽहं सा मां भणति त्वं प्रत्यक्षो देव इति।

(३) किमिव।

---

पाशकाभिनिवेशी पाशक्रीड़ासमासक्तः। मन्दुरा अश्वशाला तत्र स्थितो मर्कटः वानरः।

(क) भृङ्गरिटिः शिवानुचरो भृङ्गीति प्रसिद्धः।

विदूषकः। को दुज्जणवअणाणं (ञ) कणं देहि (१)। (अङ्गुल्या निर्दिशन्) एसा उण सोहासमुदएण उवहसंती विअ कावि अपुव्वा आलिहिदा (२)।

राजा। इयमपूर्वैवास्माकं न पुनरनङ्गस्य। (सम्यग्विलोक्य) सैवेयमस्मन्मनःसागरशशिलेखा (ट)। अहो रूपसंपदे तस्याः।

चक्षुर्मेचकमम्बुजं विजयते वक्त्रस्य मित्रः शशी
भ्रूसूत्रस्य सनाभिमन्मथधनुर्लावण्यपण्यं वपुः।
लेखा कापि रदच्छदे च सुतनोर्गात्रे च तत्कामिनी-
मेनां वर्णयिता स्मरो यदि भवेद्वैदग्ध्यमभ्यस्यति॥ २३॥

---

(१) को दुर्जनवचनानां कर्णं ददाति।

(२) एषा पुनः शोभासमुदयेनोपहसन्तीव काप्यपूर्वा आलिखिता।

---

(ञ) दुर्जनवचनानाम् सम्बन्धविवक्षया अधिकरणेऽपि षष्ठी।

(ट) अस्मन्मनःसागरशशिलेखा अस्माकं मनोरूपस्य सागरस्य शशिलेखा चन्द्रकला यथा चन्द्रकला सागरमुद्वेलयति तथेयं मे मन इति भावः।

(२३) चक्षुरिति। अस्या इत्यध्याहार्य्यं सुतनोः सुन्दराकृतेः मेचकं नीलं चक्षु मेचकम् अम्बुजं नीलोत्पलमित्यर्थः विजयते परिभवति। शशी चन्द्रस्य वक्त्रस्य मुखस्य मित्रं सुहृत् साम्यादिति भावः। मन्मथधनुः कामशरासनं भ्रूसूत्रस्य भ्रूलेखायाः सनाभि सोदरं वपुः शरीरं लावण्यमयं पण्यं विक्रेयं वस्तु, रदच्छदे दशनपल्लवे गात्रे च कापि अनिर्वचनीया रेखा दृश्यते इति शेषः। तत् तस्मात् एनां कामिनीं स्मरः अपिरत्नाध्याहार्य्यः कामोऽस्मीत्यर्थः वर्णयिता भवेदिति शेषः

विदूषकः । ( स्वगतम् ) का उण एसा देवी परिवारे । ( विचिन्त्य ) भोदु कोदूहलेण देवी अहिणआगदं णिअमादुलजादअं ( ठ ) मिअंकवम्माणं वारंवारेण विरइदमहिलावेसं कारेदि । तं च दट्ठूण अणाअपरमत्थेहिं चित्तकलेहिं सज्जेव चित्ते आलिहिद त्ति तक्केमि ता ण विष्फोलइस्सं विह्मअदु दाव पिअवअस्सो । ( प्रकाशम् ) वड्ढावइस्सं भो कुमारिआ क्खु एसा एदाए णेवच्छो लक्खीअदि ( १ ) ।

राजा । यथाह प्रियवयस्यः ।

कन्येति सूचयति वेषविशेष एवं
यन्नीलचोलकवती लिखिताऽत्र चित्रे ।
पाणिग्रहात्प्रभृति तु प्रमदाजनस्य
नीवीविशेषसुभगः परिधानमार्गः ॥ ३४ ॥

---

( १ ) का पुनरेषा देवीपरिवारे । भवतु कौतूहलेन देवी अभिनवागतं निजमातुलजातकं मृगाङ्कवर्माणं वारंवारं विरचितमहिलावेशं कारयति । तां च दृष्ट्वा अज्ञातपरमार्थैश्चित्रकरैः सैव चित्रे आलिखितेति तर्कयामि तन्न विस्फोटयिष्ये विस्मयतु तावत् प्रियवयस्यः । वर्द्धापयिष्ये भो कुमारिका खलु एषा एतस्या नेपथ्यं लक्ष्यते ।

---

तदासौ वैदग्ध्यं शिल्पनैपुण्यम् अभ्यस्यति अभ्यस्तशिल्पनैपुण्यः स्मरो यदि कथञ्चित् एनां वर्णयितुं समर्थः स्यादिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ठ) अभिनवागतं मृगाङ्कवर्माणं नाम निजमातुलजातकं स्वमातुलपुत्रम् । विस्फोटयिष्ये प्रकाशयिष्यामि । वर्द्धापयिष्ये वर्द्धयिष्यामि राज्ञः विस्मयातिशयमिति भावः ।

(३४) कन्येति । एष वेषविशेषः एव कन्येति इयं कन्या कुमारीति सूचयति यत् यस्मात् अत्र चित्रे नीलनिचोलवती नीलवसना

( विमृश्य )

अहो वपुःश्रीर्लिखितुर्जनस्य स्वाकारसंवादि यदत्र चित्रम् ।
इदं च पौरन्ध्रमवैमि कर्म रेखानिवेशोऽत्र यदेकधारः ॥३५॥

( सम्यग्विलोक्य ) तदियं मकरध्वजवैजयन्ती काऽपि स्वयमेव स्वं लिखितवतीति निर्णीयते ।

विदूषकः । एव्वं णेदं जदो ( ड ) गरिट्ठजणगोट्ठीसु विद्दुश्थं किल सुणीअदि । जादिसो चित्तअरो तादिसी चित्तअम्मरुअरेहा जादिसो कई तादिसा कव्वबंधच्छाअ त्ति (१)

---

(१) एवमेतत् । यतो गरिष्ठजनगोष्ठीष्वपोह्यं किल श्रूयते । यादृशश्चित्रकरस्तादृशी चित्रकर्मरूपरेखा यादृशः कविस्तादृशी काव्यबन्धच्छायेति ।

---

स्वालिखिता चित्रिता । तु किन्तु पाणिपद्भात् प्रभृति परिणयादारभ्य प्रमदाजनस्य नारीजनस्य परिधानमार्गः परिधानपद्धतिः वस्त्राच्छादननियम इत्यर्थः नीवी वसनग्रन्थिः तस्या विशेषेण वैचित्र्येण सुभगः रम्यः भवतीति शेषः तस्यास्तु न तथेति भावः । अतो नेयं परिणीतेति सन्दर्भार्थः । वसन्ततिलकं वृत्तम् ।

(३५) अहो इति । अहो इत्याश्चर्ये, लिखितुः चित्रयितुर्जनस्य वपुषः शरीरस्य श्रीः शोभा आश्चर्यरूपेति भावः । यत् यस्मात् अत्र चित्रं चित्रकर्म स्वम् आकारं संवदति अनुकरोतीति तथा प्रतीयत इति शेषः अत् यतः अत्र एकधारः एका धारा नियमो यस्य तादृशः रेखानिवेशः रचनाविन्यासः अतः इदं पौरन्ध्रं स्त्रैणं कर्म अवैमि च जानामि च पुंस्कर्मं तु धारावैचित्र्यम् अस्य तु न तथेति चित्रयित्री कापि रमणीति तर्कयामीति वक्तुराशयः । उपेन्द्रेन्द्रवज्रयोरुपजातिवृत्तं, स्यादिन्द्रवज्रा यदि तौ जगौ ग इति उपेन्द्रवज्रा, प्रथमे लघौ सेति अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति तल्लक्षणात् ।

(ड) गरिष्ठजनगोष्ठीषु महाजनसमाजेषु ।

राजा । युज्यते आकृतिमनुगच्छन्ति गुणाः । अपिच सखे ! चारायण ! ।

क्रमपरिणतरेखा मांसलैरङ्गभङ्गै-
र्लघुरपि लिखितेयं दृश्यते पूर्णमूर्त्तिः ।
अयमपि सुकुमारः सात्त्विकानां निवेश-
श्चतुरमसृणमुग्धं भावमाविष्करोति ॥ ३६ ॥

विदूषकः । इदो वि देवी मअणवती असेसपरिवारा आलिहिदा ( १ ) ।

राजा । इदमेव रूपरत्नं सम्भावयामस्तावत् ।

विदूषकः । इहावि सा अत्थि ज्जेव्व ( २ ) ।

राजा । ( आत्मगतम् ) एकं चक्षुरनेकत्र सा । ( विदूषकं प्रति ) क्वासौ ?

विदूषकः । इअमिअं ( ३ ) ।

( १ ) इतोऽपि देवी मदनवती अशेषपरिवारा आलिखिता ।
( २ ) इहापि साऽस्त्येव ।
( ३ ) इयमियम् ।

(३६) क्रमेति । इयम् आकृतिः लघुरपि क्षुद्रापि लिखिता क्रमेण आनुकूल्येन परिणताभिः विन्यस्ताभिः रेखाभिः मांसलैः परिपुष्टैः अङ्गानाम् अवयवानां भङ्गैः भङ्गिभिः पूर्णमूर्त्तिः सम्पूर्णावयवा दृश्यते पूर्णेव प्रतिभातीति भावः । अयमपि सुकुमारः सुकोमलः सात्त्विकानां मुख्यगुणजातानां स्वेदरोमाञ्चादीनां निवेशः विन्यासः चतुरमसृणमुग्धं तरलस्निग्धमनोज्ञं भावम् अभिप्रायम् आविष्करोति प्रकटयति । मालिनीवृत्तम् ।

राजा। ( विलोक्य सोत्कण्ठम् )

येनोत्पलानि च शशी च मृणालिकाश्च
रम्भालताश्च कमलानि च निर्मितानि।
नूनं स एव मृगशावदृशोऽपि वेधाः
सृष्टिक्रमो यदयमेकतया चकास्ति ॥ ३७ ॥

विदूषकः। (स्तम्भे (ढ) शालभञ्जिकां विलोक्य) इयंपि सज्जेव (१)।

राजा। इयमपि साऽस्मद्विलोचनचकोरचन्द्रिका ( विलोक्य सोत्कण्ठम् )

सा दुग्धमुग्धमधुरच्छविरङ्गयष्टि-
स्ते लोचने तरुणकेतकपत्रदीर्घे।
कम्बोर्विडम्बनकरश्च स एव कण्ठः
सैवेयमिन्दुवदना मदनायुधं वा ॥ ३८ ॥

---

( १ ) इयमपि सैव।

---

(३७) येनेति। येन उत्पलानि नीलोत्पलानि च शशी चन्द्रश्च मृणालिकाश्च रम्भालताः कदल्यश्च कमलानि पद्मानि च निर्मितानि सृष्टानि, स एव नूनं निश्चितम् अस्याः मृगशावदृशः बालमृगाक्ष्याः अपि वेधाः स्रष्टा, यद् यस्मात् अयं सृष्टिक्रमः एकतया एकरूपेणैव चकास्ति शोभते वसन्ततिलकं वृत्तम्।

(ढ) शालभञ्जिकां पुत्तलिकाम्।

(३८) सेति। दुग्धवत् मुग्धा सुन्दरी मधुरा मनोहारिणी छविर्यस्याः तादृशी अङ्गयष्टिः,सा एव या मया स्वप्ने दृष्टेति भावः। एवं सर्वत्र योज्यम्। तरुणकेतकपत्रवत् दीर्घे आयते ते एव लोचने। कम्बोः शङ्खस्य विडम्बनकरः अनुकारी स एव कण्ठः। तस्मात् इयं सा स्वप्ने

( सवितर्कम् )

न स्वप्नानुभवस्य कश्चिदपरः सब्रह्मचारी मम
स्यात्सङ्कल्पकृतश्चकास्तु मनसः कस्यैष लेखाक्रमः ।
तन्मन्ये क्वचिदस्त्यसौ कुवलयच्छायामुषा चक्षुषा
यत्सादृश्यपरिग्रहादिह दृशौ दीर्घे समावेशिते ॥ ३८ ॥

( विलोक्य ) भवतु पुनर्योग्यस्थानविन्यासमासादयतु स्वप्नहारः सञ्चरतु शालभञ्जिकारूपाया अप्येतस्याः कण्ठमूलमलङ्करोतु बालविचकिलवल्ली कोरकनिकुरम्ब (ण) इति ।

( तथा करोति )

विदूषकः । इदो वि चित्तगदा स ज्जेव । (सोल्लासम्)

---

दृष्टा इन्दुवदना चन्द्रमुखी एव, वा अथवा मदनस्य कामस्य आयुधम् अस्त्रं स्त्रीरूपेण दृष्टमिति शेषः । वसन्ततिलकं वृत्तम् ।

(३८) नेति । मम स्वप्नानुभवस्य अपरः कश्चित् सब्रह्मचारी सहाध्यायी न स्यात् नास्तीत्यर्थः यथाहं स्वप्ने दृष्टवान् तथा नापरः येन स्वप्नदृष्टा चित्रिता इति भावः । कस्य वा मनसः सङ्कल्पकृतः मनः-कल्पित इत्यर्थः एष लेखाक्रमः रचनापरिपाटी च कास्तु शोभतां न कस्यापीत्यर्थः केनापि मनसा एवं सङ्कल्प्य न चित्रितेति भावः । तत् तस्मात् असौ स्वप्नदृष्टा रमणी क्वचित् कुत्रापि अस्ति विद्यते इति मन्ये यत् यस्मात् कुवलयस्य नीलोत्पलस्य छायां कान्तिं मुष्णाति हरतीति तादृशेन चक्षुषा सादृश्यपरिग्रहात् साम्यावबोधात् इह तादृशे दीर्घे आयते दृशौ नेत्रे समावेशिते चित्रिते । नेयं मूर्त्तिः काल्पनिकीति सन्दर्भार्थः । शार्दूलविक्रीडितं वृत्तम् ।

(ण) योग्यस्थानविन्यासं यथास्थानस्थितिं स्वप्नहारः स्वप्नलब्धहारः । बालविचकिलवल्लीम् अभिनवविचकिलाख्यलतां कोरकनिकुरम्बः कलिकासमूहः ।

मिअंकप्पतिबिंबमालाहिं विप्पलद्ध ह्मि। अअं उण पच्चक्खो पुण्णिमाचन्दो ( १ )।

राजा। क्व पुनरसावस्मन्नयनामृतवृष्टिः?

विदूषकः। इअमिअं जा हरिणंकखण्डपंडरेहिं (त) तिरिच्छेहिं दिट्ठिच्छड़ाकड़क्खेहिं विप्फुरदि दिम्मुहाइं पाणिसंचारेण विच्छुरेदि कंकेलिपल्लवाइं चरणचालणेण विरएदि पंकअसंकासमाउलाइं भमरउलाइं ( २ )।

राजा। भवत्प्रशंसिता सत्यस्वप्नतेव जाता। (विलोक्य) सैवेयं सञ्जीवनौषधिर्मकरध्वजस्य विशल्यकरणौषधिर्मे हृदयस्य। ( विभाव्य )

मात्रानर्तनपण्डितभ्रु वदनं किञ्चित्प्रगल्भे दृशौ
स्तोकोद्भेदनिवेशितस्तनमुरोमध्यं दरिद्राति च।

---

( १ ) इतोऽपि चिन्तयता सैव। मृगाङ्कप्रतिबिम्बमालाभिर्विप्रलब्धोऽस्मि। अयं पुनः प्रत्यक्षः पूर्णिमाचन्द्रः।

(२) इयमियम्। या हरिणाङ्कखण्डपाण्डुरैस्तिरश्चीनैर्दृष्टिच्छटाकटाक्षैर्विस्फोरयति दिङ्मुखानि, पाणिसञ्चारेण विच्छुरयति कङ्केलिपल्लवानि, चरणचालनेन विरचयति पङ्कजशङ्कासमाकुलानि भ्रमरकुलानि।

---

( त ) हरिणाङ्कखण्डपाण्डुरैः चन्द्रकलासदृशैः तिरश्चीनैः वक्रैः दृष्टिच्छटाकटाक्षैः कटाक्षरूपैर्दर्शनप्रसरैः विस्फोरयति विततिम्ना योजयति, पाणिसञ्चारेण करचालनेन कङ्केलिपल्लवानि अशोकपल्लवानि विच्छुरयति अनुकरोति, विरचयति करोति।

(४०) मात्रेति। यत् यस्मात् मात्रया परिमाणेन यत् आनर्त्तनं ताण्डवविशेषः तस्मिन् पण्डिते चतुरे भ्रुवौ यस्य तथोक्तं वदनं किञ्चित्

श्रेस्या यज्जघनं घनं च कलया प्रत्यङ्गमेणीदृशः
सत्यङ्कारमिव स्मरैकसुहृदा तद्यौवनेनार्पितम् ॥४०॥

विदूषकः । उल्लसिदभूलदेण उदंगुलिकरकमलेण इमिणा संठाणेण ( श ) एसा किं उण कुवंती चिठ्ठदि (१) ।

राजा । यद् भ्रूलते तरलिते यदुदङ्गुलीकः
पाणिः पुरो यदपि चक्षुरलब्धलक्ष्यम् ।
उन्मुद्रिताधरदलं च यदास्यमस्या-
स्तत्काव्यकर्म्मणि निषक्तमवैमि चेतः ॥ ४१ ॥

---

(१) उल्लसितभ्रूलतेन उदङ्गुलिकरकमलेनानेन संस्थानेनैषा किं पुनः कुर्वती तिष्ठति ।

---

ईषत् प्रगल्भे तरले दृशौ नेत्रे, स्तोकः अल्पः उद्भेदः प्रकाशः यत्र तत् यथा तथा निवेशितौ स्तनौ यत्र तादृशम् उरः वक्षस्थलं मध्यं कटिदेशः दरिद्राति च नितरां कृशमिति भावः । जघनञ्च घनं निविड़ं विशालमिति यावत् । तत् तस्मात् अस्या एणीदृशः मृगाक्ष्याः कलया विलासविशेषेण उपलक्षितं प्रत्यङ्गं सर्वाणि अङ्गानीत्यर्थः स्मरैकसुहृदा मदनप्रियसखेन यौवनेन सत्यङ्कारमिव अर्पितं दत्तम् एतत् मदभिमतं कर्म त्वया कर्त्तव्यमिति उक्ते करिष्यामीति कथयते कर्मकराय तद्वचनदार्ढ्याय यत् किञ्चित् पूर्वं दीयते तत् सत्यङ्कारशब्देनोच्यते । प्रकृतै स्मरसाहाय्यं त्वया करणीयमिति तद्बन्धुना यौवनेन तस्यै कामिन्यै तत्तदङ्गं यथोचितम् अर्पितमिवेति भावः अत्रोत्प्रेक्षा तदुक्तं दर्पणे । भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति । शार्दूलविक्रीड़ितं वृत्तम् ।

(श) संस्थानेन स्थित्या आकारेण वा ।

( ४१ ) यदिति । यद् यस्मात् भ्रूलते तरलिते चञ्चलिते, यद् यस्मात् पाणिः उद्गता अङ्गुलयो यस्य तादृशः, यदपि यस्माच्च चक्षुः

विदूषकः। एवं णेदं जदो पुरदो इमीए अद्दलिखिदा अक्खरावली चिट्ठदि (१)।

राजा। (वाचयति —

*"विधत्ते सोल्लेखं कतरदिह नाङ्गं तरुणिमा।"

(विमृश्य) अहो! शिखरिणीपादः। (द) अहो! सूक्तियुक्ता वाचः। अहो! हृद्या वैदर्भी रीतिः। अहो! माधुर्य्यमपर्य्याप्तम्। अहो! निष्प्रमादः (ध) प्रसादः।

---

(१) एवमेवैतत्। यतः पुरतोऽस्या अर्द्धलिखिता अक्षरावली तिष्ठति।

---

पुरः अग्रतः अलब्धलक्ष्यम् अप्राप्तदृष्टिविषयम् अस्थिरमिति यावत् यस्य आस्यं मुखम् उन्मुद्रितौ अधरदलौ यस्य तथाभूतं तत् तस्मात् अस्याः रमण्याः चेतः चित्तं क व्यकर्मणि कवितारचनायां निषक्तम् अवैमि अवगच्छामि काव्यरचयितुर्लक्षणमस्या दृश्यते इति भावः। वसन्ततिलकं वृत्तम्।

* विधत्ते इति। तरुणिमा तारुण्यं यौवनमित्यर्थः इह जगति कतरत् अङ्गं शरीरं सोल्लेखं सोद्घर्षं समस्तष्टमित्यर्थः न करोति अपितु सर्वमेव करोतीत्यर्थः। नाङ्गमित्यत्र चाङ्गमिति पाठे कतरत् किमपि अङ्गं न तु सर्वम् अङ्गमित्यर्थः।

(द) शिखरिणीपादः शिखरिण्याः सप्तदशाक्षरवृत्तभेदस्य। तदुक्तं छन्दोमञ्जर्यां "रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी" इति। पादः चतुर्थभागः। सूक्तियुक्ता शोभनवचनयुक्ता। हृद्या मनोहारिणी वैदर्भी रीतिः। तदुक्तं दर्पणे "माधुर्य्यव्यञ्जकैर्वर्णैः रचना ललितात्मिका। अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरुच्यते" इति।

(ध) निष्प्रमादः प्रमादोऽनवधानता तद्रहितः प्रसादः तदाख्यगुणविशेषः। तदुक्तं दर्पणे "चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवा-

विदूषकः। ता उचिदकालमभिसरीअदु (न) सुंदरी पिज्जदु णअणंजलिसंपुडेहिं पुण्णिमाचंदो पूरिज्जंतु कस-कुहराइं सुहासिदसाअरेहिं णाच्चिवीअदु रहसुत्थंभिदहत्थो मअणणट्टावओ (१)।

राजा। (पदान्तरे स्थित्वा, चतुर्दिशमवलोक्य) अहो! दयिताद्वैतं (प) वर्त्तते। तथाहि—

सुतनुरियमितस्ततश्च चित्रै-
र्गुणगुरुरत्र च शालभञ्जिकेयम्।
स्थितमिह सुतनोर्वपुश्चतुर्धा
स्मरशरतापरुजं विभज्य सोढुम्॥ ४२॥

---

(१) तदुचितकालमभिसार्यतां सुन्दरी पीयतां नयनाञ्जलिसंपुटैः पूर्णिमाचन्द्रः पूर्यतां कर्णकुहराणि सुभाषितसागरैर्न्नर्त्याप्यतां रभसो-त्तम्भितहस्तो मदननर्त्तकः।

---

कलः। स प्रसादः समस्तेषु रसेषु रचनासु च" इति। अवधानेन प्रसादगुणवत्तया रचितोऽयं सन्दर्भ इति भावः।

(न) उचितकालं यथासमयम् अभिसार्य्यताम् अभिगम्यताम्। नर्त्याप्यतां नर्त्त्यतां मदननर्त्तकः मदन एव नर्त्तकः नृत्यकारकः कामः परितृप्यतामिति भावः।

(प) दयिताद्वैतं दयितायाः अद्वैतम् एकीभावः।

(४२) सुतनुरिति। इयं गुणगुरुः अतिगुणवती सुतनुः इतस्ततः चित्रैः आलेख्यैः विराजते इति शेषः अत्र च इयं शालभञ्जिका, तस्मात् अस्या वपुः शरीरं स्मरशरतापरुजं मदनशरतापपीड़ां सोढुं चतुर्धा स्थितमिव। तिसृषु दिक्षु चित्ररूपाम् एकस्यां दिशि च शालभञ्जिकां दृष्ट्वा राजा चतुर्धा स्थितामिव सम्भावयामासेति भावः।

तदेहि, समुपसृत्य सुभाषितेन श्रवणे कृतार्थयावः (फ)। न खलु व्यापारमन्तरेण कलितापि शुक्तिर्मुञ्चति मौक्तिकानि इति। (उभौ परिक्रामतः)।

विदूषकः। (पुरतः सरन् भीत्या स्फोटनं नाटयित्वा) भो ओसर ओसर भूदंतरं क्खु एदं ता इमिणा पडिकुविददेवीभूलदाभंगकुडिलेण दंडकट्ठेण गाढं पाडिस्स ता पेक्ख मे पुरिसआरम् (१)।

राजा। तर्हि मालतीकुसुमैर्दुकूलं कल्पयिष्यसि।

विदूषकः। ता किं णु क्खु एदं (२)।

राजा। सखे! तर्कयामि स्फटिकभित्तेः परतः स्थितया स्वच्छभावादितः सुव्यक्तयाऽनया भवितव्यम्। तदेहि, केलिकैलासपश्चिमेनैनां सम्भावयामः। (तथा कुरुतः)

विदूषकः। तुरिदतरमवक्कन्ता (ब) सा जदो समंजसा इअं देवी भवणाहिमुही पअपरिवाड़ी दीसइ (३)।

---

(१) भो! अपसरापसर, भूतान्तरं खल्वेतत्, तदनेन परिकुपितदेवीभ्रूलताभङ्गकुटिलेन दण्डकाष्ठेन गाढ़ं पातयिष्ये तत् प्रेक्ष मे पुरुषकारम्।

(२) तत् किं नु खल्वेतत्?

(३) त्वरिततरमपक्रान्ता सा यतः समञ्जसा इयं देवी भवनाभिमुखी पदपरिपाटी दृश्यते।

---

(फ) कृतार्थयावः कृतार्थौ कुर्वः। व्यापारं यत्नं स्फोटनरूपमिति यावत्। कलिता गृहीता।

(ब) अपक्रान्ता चलिता गता इत्यर्थः। समञ्जसा सत्वरगमनात्

राजा। हृदय! स्वस्ति भवते। एनामनुवर्त्तता (भ) स्मर्त्तव्या वयम्। (नेपथ्ये) जय जय त्रिलिङ्गाधिपते! सुखाय माध्यन्दिनी (म) सन्ध्या भवतु भवतः। सम्प्रति हि—

धत्ते पद्मलतादलेषुरुपरि स्वं कर्णतालं द्विपः
शष्पस्तम्बरसान्नियच्छति शिखी मध्ये शिखण्डं शिरः।
मिथ्या लेढ़ि मृणालकोटिरभसा दंष्ट्राङ्कुरं शूकरो
मध्याह्ने महिषश्च वाञ्छति निजच्छायामहाकर्दमम् ४२

---

विभ्रमविन्यस्ता इति यावत् देव्या भवनाभिमुखी पदपरिपाटी चरण-पङ्क्तिः।

(भ) अनुवर्त्तता अनुसरता यथा त्वमेनामनुसरसि तथा मामपि अनुसारय इति भावः।

(म) माध्यन्दिनी सन्ध्या मध्याह्नकालः।

(४२) धत्ते इति। मध्याह्ने इति सर्वत्र योज्यम्। द्विपः करी पद्मलतानां पद्मिनीनां दलेषु पलाशाभिलाषी सन् उपरि शिरस इति शेषः स्वं कर्णतालं धत्ते धारयति मस्तकोपरि कर्णतालधारणसङ्केतेन पद्मपत्राच्छादनरूपमिङ्गितं करोति। शिखी मयूरः शिरः मस्तकं शष्पस्तम्बरसात् नवतृणग्रासास्वादात् तं त्यक्त्वेति भावः यवर्थे पञ्चमी। मध्ये शिखण्डं पिच्छमध्ये नियच्छति गोपायति। शूकरः वराहः मृणालकोटिरभसात् मृणालाग्रहर्षात् रभसो वेगहर्षयोरिति विश्वः। मृणालाग्रमिति बुद्धा हर्षेणेति भावः दंष्ट्राङ्कुरं दन्तमुकुलं मिथ्या लेढ़ि जिह्वया पुनःपुनः स्पृशति। महिषश्च निजच्छाया एव महान् कर्दमः तं वाञ्छति आकाङ्क्षति। सर्वत्र अत्युत्तापादिति भावः। स्वभावोक्ति-रलङ्कारः। तदुक्तं दर्पणे "स्वभावोक्तिरसौ चारु यथावद् वस्तुवर्णनम्" इति। शार्दूलविक्रीड़ितं वृत्तम्।

अपिच, विशन्तीनां स्नातुं जघनपरिवेषैर्मृगदृशां
यदम्भः संप्राप्तं प्रमदवनवाप्यास्तटभुवम्।
गभीरे तन्नाभीकुहरपरिणाहाध्वनिरसत्
कुहुङ्कारस्फारं रचयति निनादं नमति च ॥ ४४ ॥

विदूषकः। भो देवीए भवणं गदुअ मज्झण्णसंझा णिअत्तिअदे तिस्सा (य) पउत्तिलंभे पअट्टीअदु (१)।

(इति निष्क्रान्तौ)

इति श्रीबालकवि-कविराजराजशेखर विरचितायां
विद्धशालभञ्जिकाख्यनाटिकायां
प्रथमोऽङ्कः।

---

(१) भो! देव्याः भवनं गत्वा मध्याह्नसन्ध्यां निर्वर्त्य तां तस्याः प्रवृत्तिलम्भे प्रवर्त्यताम्।

---

(४४) विशन्तीनामिति। स्नातुं विशन्तीनाम् अवरोहन्तीनां मृगदृशां जघनपरिवेषैः जघनमण्डलैः प्रमदवनवाप्याः यत् अम्भः तटभुवं सम्प्राप्तं तत् अम्भः गभीरे नाभिकुहरपरिणाहाध्वनि नाभिगर्त्तविस्तारवर्त्मनि रसत् लसत् सत् कुहुङ्कारस्य स्फारं हर्षि रचयति नमति नतं भवति च। शिखरिणीवृत्तम्।

(य) प्रवृत्तिलम्भे वार्त्तालाभे सा किमाचरतीति वृत्तान्तमवगन्तुमिति भावः।

# अथ द्वितीयोऽङ्कः ।

( ततः प्रविशतो मिथः सम्मुखीने चेट्यौ )।

( परिक्रम्य ) एका । ( इतरामञ्जलिं विधाय ) हला तरंगिए ! हिअअप्पविट्टराअक्खरा (क) विअ लक्खीअसि जं दाणीं संमुहागदं पि मं अणालक्खीअ पउत्तासि ( १ ) ।

द्वितीया । ( समालिङ्ग्य ) सहि कुरंगिए ! मा उण कुप्प गोरी ( ख ) मे कुप्पदु, जइ मए दिट्ठासि अस्सहिअअत्तणेण ( २ ) ।

कुरङ्गिका । अइ ! कीदिसं ते अस्सहिअअत्तणं ( ३ ) ।

तरङ्गिका । तादिसं जादिसेण तुह वि पुरदो मंतअंतीए उक्कंपदि मे हिअअं ( ४ ) ।

---

(१) हला तरङ्गिके ! हृदयप्रविष्टराजाक्षरेव लक्ष्यसे, यदिदानीं सम्मुखागतामपि मामनालक्ष्य प्रवृत्ताऽसि ।

(२) सखि कुरङ्गिके ! मा पुनः कुप्यस्व, गौरी मे कुप्यतु, यदि मया दृष्टाऽसि अन्यहृदयत्वेन ।

(३) अयि ! कीदृशं ते अन्यहृदयत्वम् ।

(४) तादृशं, यादृशेन तवापि पुरतो मन्त्रयन्त्या उत्कम्पते मे हृदयम् ।

---

(क) हृदयप्रविष्टराजाक्षरा हृदयं प्रविष्टं राज्ञः अक्षरं वार्त्ता यस्यास्तादृशी । प्रवृत्ता प्रचलिता ।

(ख) गौरी भगवती पार्वती । अन्यासक्ततया अहं त्वां न दृष्टवतीत्यर्थः ।

कुर। हिअअणिव्विसेसम्मि (ग) जणे आसंक त्ति कोदूहलं मे पुच्छावेदि (१)।

तर। जं वा तं वा भोदु ण पच्छादइस्सं ण हि सिणेहो जुत्ताजुत्तमनुरु धेदि (घ) (२)।

कुर। अदो ज्जेव्व मे आसंघो (ङ) कधं विअ सहआरलट्ठीए कलकंठी कुंठिदप्पणआ (३)।

तर। अत्थि एव्वं तथा वि एवं भणीअदि मंतस्स रक्खणं कज्जसिद्धीए लक्खणं (४)।

कुर। मा एवं भण कधं विअ जीअंतादो किकलासादो सिरसुवस्स (च) पावीअदि (५)।

---

(१) हृदयनिर्विशेषे जने आशङ्केति कौतूहलं मां पृच्छयति।

(२) यद्वा तद्वा भवतु न प्रच्छादयिष्ये न हि स्नेहो युक्तायुक्तमनुरुध्यते।

(३) अत एव मे आसङ्गः। कथमिव सहकारयष्ट्या कलकण्ठी कुण्ठितप्रणया?

(४) अस्त्येवं तथाप्येवं भण्यते "मन्त्रस्य रक्षणं कार्यसिद्धेर्लक्षणम्"।

(५) मैवं भण, कथमिव जीवतः कृकलासात् शिरःसुवर्णं प्राप्यते?

---

(ग) हृदयनिर्विशेषे अभिन्नहृदये जने मयीत्यर्थः।

(घ) अनुरुध्यते विचारयति।

(ङ) आसङ्गः समाश्वासनम्। कलकण्ठी कोकिला। कुण्ठितः संकुचितः प्रणयो यस्याः तथोक्ता यथा कोकिलवधूः सहकारलताप्रणयपराङ्मुखी न भवति तथा त्वमपि मामगणयित्वा न किञ्चित् करोषीति भावः।

(च) शिरःसुवर्णं शिरःस्थं काञ्चनं यथा कृकलासमहत्वा तच्छिरःस्थितं सुवर्णं न केनापि प्राप्यते, तथा मयि जीवन्त्यां न

तर। ता सुणादु प्पिअसही अत्थि एत्थ कुंतलेसो चंडमहासेणो णाम राआ तस्स णिअराज्जपरिब्भट्टस्स इह आगदस्स सुदा कुवलयमाला णाम सा णम्मदामज्जणुत्तिणा देवेण दिट्टा हिअअं अ संपविट्टा तां च पडिच्छिदवदी (क) देवी णिअमादुलचंदवम्मसुदस्स मिअंकवम्मस्स किदे तण्णिमित्तं अ विवाहोवअरणाइं सज्जीकादुं पेसिदह्मि तग्गदमणए मए ण तुमं पेक्खिदासि (१)।

कुर। अहो देवीए विअक्खणत्तणं एव्वं किल किदे सवत्तिलंभो पडिकदो भोदि देवस्स चंदवम्ममादुलस्स सिणेहो अ दंसिदो भोदि (२)।

---

(१) तत् शृणोतु प्रियसखी, अस्त्यत्र कुन्तलेशश्चण्डमहासेनो नाम राजा, तस्य निजराज्यपरिभ्रष्टस्येहागतस्य सुता कुवलयमाला नाम, सा नर्मदामज्जनोत्तीर्णा देवेन दृष्टा हृदयं चास्य प्रविष्टा, तां च प्रतीक्षितवती देवी निजमातुलचन्द्रवर्मसुतस्य मृगाङ्कवर्मणः कृते तन्निमित्तं च विवाहोपकरणानि सज्जीकर्तुं प्रेषिताऽस्मि, तद्गतमनसा मया न त्वं प्रेक्षितासि।

(२) अहो! देव्या विचक्षणत्वं एवं किल कृते सपत्नीलम्भः प्रतिकृतो भवति देवस्य चन्द्रवर्ममातुलस्य स्नेह इव दर्शितो भवति।

---

केनापि मत्तः सकाशात् एतद्राजरहस्यं प्राप्स्यते इति भावः। कृकलास-शिरसि मयूरपुच्छेषु ताम्रमिव सुवर्णं वर्त्तते। तदुक्तं रामायणे "अथा-ब्रवीद् वैश्रवणः कृकलासं गिरौ स्थितम्। हैरण्यं संप्रयच्छामि वर्णं प्रीतस्तवाप्यहम्। सुहिरण्यं शिरो नित्यं भविष्यति तवाव्ययम्" इति।

(क) प्रतीच्छितवती गृहीतवती देवी राजमहिषी। कृते निमित्तम् अव्ययमेतत् सपत्नीलम्भः प्रतिकृतः सापत्न्यक्षोभनिवृत्तिः स्यादिति भावः।

तर । तुमं उण कहिं पत्थिदासि ( १ ) ।

कुर । अज्ज देवीए अलीअविवाहेण विडंबिदुं ( ज ) आरद्धो अज्जचाराअणो तस्स विवाहसामग्गी उप्पादेदुं अहं पेसिदा ता एहिं दुवे वि अह्मे जधासमीहिदसिद्धीए गच्छह्म ( २ ) । ( इति निष्क्रान्ते ) ।

( इति प्रवेशकः ) (झ) ।

( ततः प्रविशति सोत्कण्ठो राजा विशेष-
विभूषितो विदूषकश्च ) ।

राजा । ( मदनाकूतमभिनीय ) ( ञ ) ।

---

(१) त्वं पुनः कुत्र प्रस्थितासि ?

(२) अद्य देव्या अलीकविवाहेन विडम्बयितुमारब्ध आर्यचारायणः तस्य विवाहसामग्रीमुत्पादयितुमहं प्रेषिता, तदेहि द्वे अप्यावां यथासमीहितसिद्ध्यै गच्छावः ।

---

(ज) विडम्बयितुं प्रतारयितुम् आर्य्यचारायणः आर्य्यः मान्यः चारायणः विदूषकोपाधिकः ।

(झ) प्रवेशकः नाटकाङ्गविशेषः प्रधानपुरुषप्रवेशात् प्राक् तत्तदङ्कीयकथानां संक्षेपसूचकः प्राकृतमयः विभागविशेषः । तदुक्तं दर्पणे "प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः । अंकद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा" ।

(ञ) मदनाकूतं मदनस्य आकूतः अभिप्रायः प्रकटनमित्यर्थः यस्मिन् तत् यथा तथा । अभिनीय नाटयित्वा ।

तस्मिन् पञ्चशरे स्मरे भगवता भर्गेण भस्मीकृते
जानाम्यक्षयसायकं कमलभूः कामान्तरं निर्ममे ।
यस्यामीभिरितस्ततश्च विशिखैरापुङ्खमग्नात्मभि-
र्जातं मे विदलत्कदम्बमुकुलस्पष्टोपमानं वपुः ॥ १ ॥

( सन्तापमभिनीय )

विलीयेन्दुः साक्षादमृतरसवापी यदि भवेत्
कलङ्कस्तत्रत्यो यदि च विरुचेन्दीवरवनम् ।
ततः स्नानक्रीड़ाजनितजड़भावैरवयवैः
कदाचिन्मुच्येयं मदनशिखिपीड़ाव्यतिकरम् ॥ २ ॥

---

(१) तस्मिन्निति । भगवता भर्गेण हरेण तस्मिन् पञ्चशरे स्मरे कामे भस्मीकृते दग्धे सति कमलभूः प्रजापतिः अक्षयसायकं कामान्तरं निर्ममे सृष्टवान् इत्यहं जानामि तर्कयामि, यस्य अपरकामस्य अमीभिः आपुङ्खं पुङ्खपर्य्यन्तं मग्नाः कुटिला आत्मानः स्वरूपाणि येषां तादृशैः इतस्ततः सर्वेषु अङ्गेषु प्रविष्टैरिति भावः विशिखैः शरैः मे मम वपुः विदलत् विकसत् कदम्बमुकुलं स्पष्टं सुव्यक्तम् उपमानं यस्य तथाभूतम् असङ्ख्यशरनिचितमिति भावः जातम् । अत्र उपमोत्प्रेक्षयोरङ्गाङ्गि-भावः सङ्करः वपुषः विकसत्कदम्बोपमत्वेन पूर्ब्बोक्त उत्प्रेक्षाया उत्था-पितत्वात् । शार्द्दूलविक्रीड़ितं वृत्तम् ।

(२) विलीयेति । इन्दुश्चन्द्रः विलीय द्रवीभूय यदि साक्षात् अमृतरसस्य वापी दीर्घिका भवेत्, यदि च तत्रत्यः कलङ्कः विरुचं वि-शिष्टकान्ति इन्दीवरवनं नीलोत्पलकाननं भवेत् ततस्तस्यां वाप्यां स्नान-क्रीड़या अवगाहनेन जनितः उत्पादितः जड़भावः जाड्यं येषां तादृशै-रवयवैः अङ्गैः कदाचित् न तु नियमेनेतिभावः मदन एव शिखी अनलः तस्य या पीड़ा दाहरूपा तस्याः व्यतिकरं सम्बन्धं मुच्येयं त्यजेयं सम्भावनायामी । अत्र यद्यर्थबलेन इन्दोर्वापीसम्बन्धात् कलङ्कस्य

अपिच, सखे चारायण !

मन्दादरः कुसुमपत्रिषु पेलवेषु
नूनं बिभर्त्ति मदनः पवनास्त्रमद्य।
हारप्रकाण्डसरलाः कथमन्यथाऽमी
श्वासाः प्रनर्तितदुकूलदशाः सरन्ति ॥ २ ॥

तत्फुल्लातिमुक्तलताच्छन्नस्य (ट) तुषारपुञ्जनाम्नः कदलीगृहस्य मार्गमादेशय।

विदूषकः। (संज्ञया निर्दिशति)।

राजा। केयमचुस्तमौनमुद्रा (ठ)?

---

च इन्दीवरसम्बन्धात् असम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः। तदुक्तं दर्पणकारेण "भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्य्ययौ" इति। शिखरिणीवृत्तम्।

(२) मन्दादर इति। अद्य मदनः कामः पेलवेषु कोमलेषु लक्ष्यभेदाक्षमेष्विति भावः कुसुमपत्रिषु पुष्पवाणेषु मन्दादरः शिथिलप्रयत्नः सन् नूनं निश्चितं पवनास्त्रं वायव्यास्त्रं बिभर्त्ति, अन्यथा अमी हारप्रकाण्डसरलाः हारस्तवकवत् सरलाः दीर्घा इति यावत् श्वासाः निश्वासमारुताः प्रनर्त्तिता दुकूलस्य वसनस्य दशा अञ्चलानि यैः तथाभूताः सन्तः कथं सरन्ति वहन्ति। अत्र निश्वासस्य पवनास्त्रजन्यत्वेनोत्प्रेक्षणात् उत्प्रेक्षालङ्कारः। तदुक्तं दर्पणे, भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति। तथा मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृश इति। वसन्ततिलकं वृत्तम्।

(ट) फुल्लातिमुक्तलताच्छन्नस्य फुल्लाभिः अतिमुक्तलताभिः माधवीलताभिः छन्नस्य परिवृतस्य।

(ठ) अचुस्ता अनभिव्यक्ता मौनमुद्रा तूष्णीम्भावप्रकारः।

विदूषकः । ( भूमावक्षराणि लिखति ) ।

राजा । अष्टादशलिपिविदो ( ड ) वयं न त्वदीयाक्षरविचक्षणाः ।

विदूषकः । (दन्तैर्जिह्वामवष्टभ्य) भो ! दिक्खिदोहं (ढ) मउणे चिठ्ठामि ( १ ) ।

राजा । किमिति ?

विदूषकः । देवी संपदं ज्जेव्व मं परिणाइस्सदि ( २ ) ।

राजा । तामिव चिरन्तनब्राह्मणीम् ।

विदूषकः । णक्खु णक्खु ( ३ ) ।

राजा । अन्या का ?

विदूषकः । ओल्लागदस्स ( ण ) मिअंकवम्मस्स पुरोहिदस्स दुहिदा क्खु सा ( ४ ) ।

राजा । किंनामधेयः पुरोहितः ?

विदूषकः । ससिंगो णाम जणणी उण मिअति-

---

( १ ) भो ! दीक्षितोऽहं मौने तिष्ठामि ।

( २ ) देवी साम्प्रतमेव मां परिणायिष्यति ।

( ३ ) न खलु न खलु ।

( ४ ) ओल्लागतस्य मृगाङ्कवर्मणः पुरोहितस्य दुहिता खलु सा ।

---

( ड ) अष्टादशलिपिविदः अष्टादशप्रकाराक्षरज्ञाः ।

( ढ ) दीक्षितः व्रतव्यापृतः ।

( ण ) ओल्लागतस्य ओल्लाख्यदेशादागतस्य ।

क्किआ भविस्सघरिणी ( त ) असे दुहिदा अंबरमाला णाम (१)।

राजा। (स्वगतम्) मन्ये देवी उपहसितुमेनमिच्छति। ( थ ) तज्जोषमास्महे। वर्धतां परिहासलता।

( ततः प्रविशति चेटी )।

(परिक्रम्य पुरतोऽवलोक्य) कधं एस देवी चाराअणब्रह्मणेण समं कोदूहलकरस्स तुसारपुञ्जस्स ज्जेव सणिहिदो वट्टदि। ता विस्सवेमि, देवीसंदिट्ठं। ( उपसृत्य ) जअदु जअदु भट्टा। देवी विस्सवेदि चाराअणो दुदीअविआहे विआहिदुमारद्धो ता तुह्मेहिं ( द ) वरइत्तकेहिं होदव्वं एदस्स ज्जेव्व एक्काए गेहिणीए कदं कदलीघरं ता पविसदु देवो देवी सपरिअणा तहिं वट्टदि (२) (इति प्रवेशं नाटयति)।

---

(१) शशाङ्को नाम जननी पुनर्ङ्गलक्ष्मी भविष्यद्गृहिणी चास्या दुहिता अम्बरमाला नाम।

(२) कथमेष देवश्चारायणब्राह्मणेन सह कौतूहलकरस्य तुषारपुञ्जस्यैव सन्निहितो वर्त्तते, तद्विज्ञापयामि देवीसंदिष्टम्। जयतु जयतु भर्त्ता। देवी विज्ञापयति, चारायणो द्वितीयविवाहे विवाहितुमारब्धो तद्युष्माभिर्वरयितृभिर्भवितव्यम्। एतस्यैव एकया गेहिन्या कृतं कदलीगृहं तत् प्रविशतु देवः, देवी सपरिजना तत्र वर्त्तते।

---

( त ) भविष्यद्गृहिणी भविष्यन्ती पत्नी ममेति शेषः। अम्बरमाला अम्बरम् आकाशं लक्षणया अत्र तत् पुष्पं तस्य माला अलीकमयीतिभावः।

( थ ) जोषं तूष्णीम्। आस्महे तिष्ठामः।

( द ) वरयितृभिः वरयात्रिकैः।

( ततः प्रविशति देवी कृतवधूटीवेषश्चेटो विभवतश्च परिवारः )।

देवी। हला मेहले! (ध) कुणीअदु जामादुणो मुहावलोअणं (१)।

मेखला। ( तथाविधाय शिरसि चाघ्राय )। अज्ज चाराअण! अवणेसु रत्तंसुअं कुणसु (न) तारामेलणं (२)।

विदूषकः। ( तथा करोति )।

देवी। मेहले! तुरिदं देवावेसु भामरीओ जेण प्पज्जलिदे हुदवहे लाअंजलीओ मुंचेदि ( ३ )।

विदूषकः। दुदीअब्रह्मणि धुवं सत्तरिसिमंडलं च पेक्ख (४)।

चेटः। ( विलोक्य ) दिट्ठधुओ दिट्ठ सत्तरिसिमंडलो संवुत्तो ह्मि ( ५ )।

विदूषकः। अयि मुद्धे! दिट्ठधुआ दिट्ठसत्तरिसिमंडला संवुत्ता ह्मि त्ति भण ( ६ )।

---

( १ ) हला मेखले, क्रियतां जामातुर्मुखावलोकनम्।

( २ ) आर्य्य चारायण! अपनयस्व रक्तांशुकं कुरुष्व तारामेलनम्।

( ३ ) मेखले! त्वरितं दापयस्व भ्रामर्यः येन प्रज्वलिते हुतवहे लाजाञ्जलयो मुच्यन्ते।

( ४ ) द्वितीयब्राह्मणि ध्रुवं सप्तर्षिमण्डलं च प्रेक्षस्व।

( ५ ) दृष्टध्रुवो दृष्टसप्तर्षिमण्डलश्च संवृत्तोऽस्मि।

(६) अयि मुग्धे! दृष्टध्रुवा दृष्टसप्तर्षिमण्डला संवृत्ताऽस्मीति भण।

---

( ध ) मेखले तदाख्यायाः चेट्याः सम्बुद्धिरियम्।

( न ) तारामेलनं परस्पराक्षिकनीनिकयोः सम्मेलनम्।

( चेटविदूषकौ पुनःपुनस्तथाभिदधतः )।

चेटः। अज्ज चाराअण! देवीदासो बंधुलो (प) क्खु अहं तुए परिणीआमि। ण सुणीअदि दीवंतरे वि एसावत्था जं पुरिसो पुरिसं परिणेदि इत्थिया च इत्थिअं अंबरमालां उण अंबरमाला ज्जेव (१)।

विदूषकः। आः दासीए दुहिदे! कुट्टणि! (फ) व्भमरिणि! टेंटेंटेंटाकारिणि! दुट्ठसंघलिदे! विसमकत्तरि! छलिद ह्मि तुए ता रक्खिअस्स अत्ताणं (२)।

(सर्वे हसन्ति)।

विदूषकः। (परिक्रामति)।

राजा। देवि! विलक्षणः कुडचारायणः कुवलयवतीं (ब) प्रतिगतः। अस्माभिरपि गन्तव्यम्। तत् केनचित् कर्पूरद्वीपादा(भ)गतेन नरेन्द्रेण सिद्धौषधिमाधवीलतामण्डपो

---

(१) आर्य्य चारायण! देवीदासो बन्धुलः खल्वहं त्वया परिणीयेन श्रूयते द्वीपान्तरेऽप्येषावस्था यत् पुरुषः पुरुषं परिणयति स्त्री च स्त्रियमम्बरमालां पुनरम्बरमालैव।

(२) आः दास्या दुहितः! कुट्टिनि! भ्रमरिणि! टेंटेंटेंटाकारिणि! दुष्टसंघट्टिते! विषमकर्त्रि! छलितोऽस्मि त्वया तद् रक्षस्वात्मानम्।

---

(प) बन्धुलः असतीपुत्रः वा तदाख्यः।

(फ) भ्रमरिणि भ्रान्तिकारिणि। दुष्टसङ्घटिते दुर्जनयुते। विषमकर्त्रि! विसंवादविधायिनि! छलितः प्रतारितः। रक्षस्व आत्मानं मया ताड्यमानमिति शेषः।

(ब) कुवलयवतीं तदाख्यां कामपि महिलाम्।

(भ) नरेन्द्रेण विषवैद्येन। सिद्धौषधिमाधवीलतामण्डपः सिद्धा

माञ्जिष्ठस्तवकालङ्कृतः कृतस्तददृष्टपूर्वकं चरितमवलोकयितुं प्रियवयस्यमावर्जयितुं च गच्छामः । त्वं पुनस्तदद्भुतं प्रदोषे द्रक्ष्यसि ।

देवी । कुरंगिए ! देवतादुदीअस्स देवस्स पासपडिवत्तिणी होहिं (१) ( इति सपरिवारा निष्क्रान्ता ) ।

कुर । ( परिक्रामितकेन ) अअं अज्जचाराअणो णोमालिआगुम्मन्तरे बरही विअ मुहमेत्तणिलीणो चिट्ठदि (२) ।

राजा । तदानयैनम् ।

कुर । ( किञ्चिदुपसृत्य ) भो ! ( म ) अम्बरमालावल्लह ! देवी वाहरदि ( ३ ) (इत्यञ्चले कर्षति) ।

विदूषकः । आः दुष्टदासि ! भविस्सकुट्टणि ! तुमं पि

---

( १ ) कुरङ्गिके देवताद्वितीयस्य देवस्य पार्श्वपरिवर्त्तिनी भव ।

( २ ) अयमार्य्यचारायणो नवमालिकागुल्मान्तरे बर्हीव मुखमात्रनिलीनस्तिष्ठति ।

( ३ ) भो अम्बरमालावल्लभ ! देवी व्याहरति ।

---

विख्याता ओषधयः औद्भिदविशेषाः या माधवीलताः तासां मण्डपः तद्रचितगृहमित्यर्थः माञ्जिष्ठस्तवकालङ्कृतः मञ्जिष्ठा रञ्जनद्रव्यभेदः तद्वर्णोऽयं स्तवकः गुच्छः माञ्जिष्ठस्तवकः तेन अलङ्कृतः शोभितः । अदृष्टपूर्वकचरितम् अनालोकितपूर्वव्यापारम् । आवर्जयितुं सान्त्वयितुम् ।

( म ) अम्बरमालावल्लभ ! देवी व्याहरति आह्वयति त्वामिति शेषः ।

मं उअहससि, ता तुम्हारिसजणहिअअकुडिलेन दण्डकट्ठेण झत्ति ताडइस्सं (१)।

राजा। कुरङ्गिके! देवीमनुवर्त्तस्व तत्परिवारे क्रुद्ध-श्चारायणः।

कुर। (निष्क्रान्ता, परिक्रामितकेन) (य)।

विदूषकः। पिअवअस्सविणोदत्थं महामन्तिकारिदा रअणवदी णाम चउक्किआ (र) किं उण कीए वि सदेव-दव्व एसा (२)।

राजा। (विलोक्य स्वगतम्) हृदय! दिष्ट्या वर्धसे सम्प्रहृष्टजनप्रत्यक्षदर्शनेन (तां प्रति) सखे चारा-यण! सेवेयमस्मन्मनःशिखण्डिताण्डवयित्री वर्षालक्ष्मीः। इदमन्यत्ते कथयामि। निपुणप्रजापतिनिर्माणमेषा। यतः—

(१) आः दुष्टदासि! भविष्यकुट्टनि! त्वमपि मामुपहससि, तद्युष्मादृशजनहृदयकुटिलेन दण्डकाष्ठेन झटिति ताड़यिष्ये।

(२) प्रियवयस्यविनोदार्थं महामन्त्रिकारिता रत्नवती नाम चतुष्किका किं पुनः कयापि सदेवतैवैषा।

(य) अनुवर्त्तस्व शरणं व्रज इति भावः तत्परिवारे तस्याः देव्याः परिवारे। परिक्रामितकेन नाट्यविशेषेण।

(र) चतुष्किका चतुःशाला। सदेवता देवताविशेषेण अधिष्ठिता इत्यर्थः। अस्मदिति। अस्माकं मन एव शिखण्डी मयूरः तस्य ताण्डव-यित्री नर्त्तनकारिणी। वर्षर्त्तौ मयूरा हर्षेण नृत्यन्तीति प्रसिद्धिः। एषा निपुणस्य वैदग्ध्यवतः प्रजापतेः निर्म्माणं सृष्टिः।

चन्द्रो जडः कदलिकाण्डमकाण्डशीत-
मिन्दीवराणि च विमुद्रितविभ्रमाणि ।
येनाक्रियन्त सुतनोः स कथं विधाता
किं चन्द्रिकां क्वचिदशीतरुचिः प्रसूते ? ॥ ४ ॥

अपि चास्याः खलु लक्षयामि तामियं वयोवस्थामलं कुरुते। यस्या दिवानिशमभिनवाकल्पविकल्पगतमानसा(ख) तिष्ठति ।

उत्तालालकभञ्जनानि कवरीपाशेषु शिक्षारसो
दन्तानां परिकर्म नीविनहनं भ्रूलास्ययोग्याग्रहः ।
तिर्यग्लोचनचेष्टितानि वचसां छेकोक्तिसंक्रान्तयः
स्त्रीणां म्लायति शैशवे प्रतिकलं कोऽप्येष केलिक्रमः ॥५

(४) चन्द्र इति । चन्द्रः जडः शीतलः न तु अस्या मुखं सतत-शीतस्य क्लेशजनकत्वात् चन्द्रेण तन्मुखस्योपमा न सङ्गच्छते इति भावः । कदलीकाण्डं रम्भास्कन्धः अकाण्डे असमये शीतं यदा शीतं दुःखकर-त्वात् निष्प्रयोजनं तदापि शीतलमित्यर्थः अस्या ऊर्वोस्तु शैत्यं ग्रीष्म एव न तु शिशिरे इति भावः। इन्दीवराणि च नीलोत्पलानि च विमुद्रिता विरहिता विभ्रमाः विलासाः अपाङ्गचालनादिरूपा येषां तथोक्तानि न तु अस्या नयनानि तेषां विभ्रमपूर्णत्वादिति भावः । येन प्रजापतिना अक्रियन्त कृतानि, स अस्याः सुतनोः सुन्दर्याः कथं विधाता स्रष्टा भवेदिति शेषः । तथाहि अशीतरुचिः उष्णांशुः क्वचित् चन्द्रिकां किं प्रसूते ? उत्पादयति ? नैवेत्यर्थः । वसन्ततिलकं वृत्तम् ।

(ख) अभिनवेति । अभिनवेषु नूतनेषु आकल्पेषु भूषणेषु यः विकल्पः अनुरागः तद्गतं तदासक्तं मानसं यस्याः तादृशी ।

(५) उत्तालेति । शैशवे बाल्ये म्लायति म्लानिं गच्छति अतिक्रा-

विदूषकः । (आकारमाकलय्य सोपहासम्) एहि पुरतो भवीअ देवीसआसं गच्छह्म (१) ।

राजा । सखे ! पश्यामस्तावत् ।

विदूषकः । किं तुमं अधुव्वहवलीवद्दो विअ ठाणे ठाणे भन्तो भवसि ता गुडुचीदण्डो विअ भवं इध ज्जेव्व परोहदु अहं उण देवीसआसं गच्छेह्मि (२) ।

राजा । सर्वं सम्भाव्यते त्वयि किं मधुनं कुसुमयति (व) ।

---

(१) एहि पुरतो भूत्वा देवीसकाशं गच्छावः ।

(२) किं त्वमधूर्वहबलीवर्द इव स्थाने स्थाने भ्रान्तो भवसि, तद् गुडूचीदण्ड इव भवानत्रैव प्ररोहतु अहं पुनर्देवीसकाशं गच्छामि ।

---

सतीत्यर्थः स्त्रीणां प्रतिकलं कला अणुमात्रः कालविशेषः कलायां कलायां प्रतिकलं प्रतिक्षणमिति यावत् उत्तालं सततम् अलकानां चूर्णकुन्तलानां भञ्जनानि विन्यासविशेषेण स्थापनानि, कबरीपाशेषु केशबन्धनेषु शिखारचः वैचित्र्यकरणप्रवृत्तिः, दन्तानां परिकर्म प्रसाधनं मार्जनद्रव्यविशेषेणेति शेषः, नीविनहनं परिधानवसनस्य ग्रन्थिविशेषेण बन्धनं, भ्रुवोर्लास्यस्य नृत्यस्य भङ्गिविशेषस्य इत्यर्थः योग्यायाम् अभ्यासे च ग्रहः यत्नः, तिर्य्यक् वक्रं यथा तथा लोचनवेष्टितानि अपाङ्गेक्षणादीनि तथा वचसां वक्रोक्तिषु विदग्धवाणीषु संक्रान्तयः वक्रोक्तय इति यावत् इत्येवं कोऽपि अनिर्वचनीयः स्वाभाविको वा कौलिक्रमः क्रीड़ाप्रकारः वर्त्तते इति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ।

(व) कुसुमयति कुसुमानि करोति जनयतीत्यर्थः लेः कथाख्याने णिरित्यनेन कुसुमशब्दात् णौ कृते लटो रूपम् ।

विदूषकः। ( विहस्य पुरोऽवलोक्य च ) भो उप्फाल-संफालाइं ( अ ) करेदुं लग्गा ( १ )।

राजा। ( विहस्य। कन्दुकेन क्रीडति। तथाहि )।

अमन्दमणिनूपुरक्वणनचारुचारिक्रमं
झणज्झणितिमेखलास्खलिततारहारच्छटम्।
इदं तरलकङ्कणावलिविशेषवाचालितं
मनो हरति सुभ्रुवः किमपि कन्दुकक्रीड़नम्॥ ६॥

विदूषकः। एव्वं ज्जेव ( २ )।

चंचलचलणचल्लिवक्किमवेल्लिदचोलअंचलं
वेल्लिए वेणिवल्लिहल्लावणघुअविअइधुमल्लिअं।

---

( १ ) भो उत्फालसंफालानि कर्त्तुं लग्ना।

( २ ) एवमेवैतत्।

चञ्चलचरणचारिविक्रमवेल्लितचोलाञ्चलं
वल्लनशीलवेणिवल्लीचालनधूर्त्तविचकिलमल्लिकम्।

---

(अ) उत्फालसंफालानि व्यापारविशेषान्। लग्ना प्रवृत्ता।

(६) अमन्देति। अमन्देन अनल्पेन मणिनूपुरक्वणनेन चारु मनोज्ञं यथा तथा चरति प्रवर्त्तते इति चारी क्रमः पादविन्यासः यस्मिन् तादृशम्। झणझणिति मेखलाया रसनाया यत् स्खलनं पतनशब्दः तेन तारा महती हारस्य कण्ठनिहितस्य छटा स्खलनविशेषो यस्मिन् तथाभूतं तथा तरलाभिः चपलाभिः कङ्कणावलिभिः हस्ताभरणवृन्दैः विशेषेण वाचालितं शब्दायितम् इदं किमपि अनिर्वचनीयं कन्दुक-क्रीड़नं मनः हरति आह्लादयति। पृथ्वीवृत्तं जसौ जसयला वसु-ग्रहयतिश्च पृथ्वीगुरुरिति लक्षणात्।

(७) चञ्चलेति। चन्द्रमुख्या अस्या गेन्दुककेलितात्पर्यं कन्दुकं

रेहद घणघणंतरसणावलिकिंकिणिअंकणुच्चअं
चंदमुहीए मअणरंगंगणं गेंदुअकेलितांडवं ॥ ७ ॥

राजा ।

अस्याः स्वेदाम्बुबिम्बच्युततिलकतया व्यक्तवक्त्रेन्दुकान्ते
र्वारंवारेण वेगप्रहणनगणनाकेलिवाचालितायाः ।
तत्पातोत्थानतालक्रमनमितदृशस्ताण्डवोत्तालताली-
लालित्यात्क्षोभिताः स्मः प्रतिकलममुना कन्दुकक्रीडितेन॥८

( भूयो विभाव्य ) । अहह ! महता वेगेन वर्तते ।

चेलाञ्चलेन चलहारलताप्रकाण्डै-
र्वेणीगुणेन च बलाद्वलयीकृतेन ।

---

राजते घणघणद्रसनावलिकिङ्किणीकङ्कणोच्चयं
चन्द्रमुख्या मदनरङ्गाङ्गणं गेन्दुककेलिताण्डवम् ॥

---

क्रीड़नक्षत्यं मदनरङ्गाङ्गणं मदनस्य कामस्य रङ्गाङ्गणं नृत्यशालाङ्गण-
भूमिः ।

(८) अस्या इति । अमुना कन्दुकक्रीड़ितेन स्वेदाम्बुविन्दुभिः
च्युतं तिलकं यस्यास्तयोक्तायाः व्यक्ता स्फुटा वक्त्रेन्दोः मुखचन्द्रस्य
कान्तिर्यस्याः तथाभूतायाः वारंवारेण प्रतिवारं वेगेन यत् प्रहणनम्
आघातः तस्य गणनया यः केलिः तत्र वाचालितायाः मुखरायाः तथा
तस्य कन्दुकस्य पाते उत्थाने च यः तालक्रमः तेन नमिते दृशौ यया
तादृश्याः अस्याः ताण्डवे नर्त्तने या उत्ताला ताली करापातः तस्य
लालित्यात् वैचित्र्यात् प्रतिकलं प्रतिक्षणं क्षोभिताः हृताः स्म वय-
मिति शेषः । स्रग्धरावृत्तं, म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा
कीर्त्तितेयमिति लक्षणात् ।

(९) चेलेति । इयं नतभ्रूः हेलया विलासेन आहिता रचिता

हेलाहितभ्रमरकभ्रममण्डलीभि-
र्च्छत्रत्रयं रचयतीव चिरं नतभ्रूः ॥ ९ ॥

(पुनर्निरूप्य)

स्मरशरधिनिकाशं कर्णपाशं कृशाङ्गी-
रयविगलिततालीपत्रताडङ्कमेकम्।
वहति हृदयचोरं कुङ्कुमन्यासगौरं
वलयितमिव नालं लोचनेन्दीवरस्य॥ १० ॥

विदूषकः। भो विरदा गेंदुअखेलणादो (१)।

राजा। न केवलं विरता सखी किं तु करतलन्यस्त-पाणिपद्मा (ष) सप्रत्यभिज्ञमिवास्मानवलोकयति च। पश्य —

(६४) भो विरता गेण्डुकखेलनात्।

ये भ्रमरकभ्रमाः चूर्णनविशेषाः तेषां मण्डलीभिः मण्डलाकारैः हेतुभिः चेलाञ्चलेन वसनखण्डेन चलाचञ्चला छारलतानां ये प्रकाण्डाः स्तम्भाणि तैः बलात् वेगात् वलयीकृतेन वेणीगुणेन केशबन्धनरज्ज्वा च करणभूतेन चिरं छत्रत्रयं रचयतीव। वसन्ततिलकं वृत्तम्।

(१०) स्मरेति। इयं कृशाङ्गी रयेण कन्दुकक्रीडनवेगेन विगलितं स्खलितं तालीपत्ररूपं ताडङ्कं भूषणविशेषो यस्मात् तथोक्तम् अतएव स्मरस्य कामस्य शरधिनिकाशं तूणीरसदृशं हृदयचोरं मनोहरं कुङ्कुम-न्यासेन गौरम् एकं कर्णपाशं लोचनमेव इन्दीवरं नीलोत्पलं तस्य वलयितं मण्डलीकृतं नालमिव वहति धारयति। उत्प्रेक्षालङ्कारः। मालिनी वृत्तं, न न म य य युतेयं मालिनी भोगिलोकैरिति लक्षणात्।

(ष) करतलन्यस्तपाणिपद्मा इत्यत्र उरस्तलन्यस्तपाणिपद्मा इति पाठः समीचीनः।

वक्त्रश्रीजितजर्जरेन्दुमलिनं कृत्वा करे कन्दुकं
क्रीड़ाकौतुकमिश्रभावमनया तास्रं वहन्त्याननम्।
भृङ्गाग्रग्रहकष्टकेतकदलस्पर्धावतीनां दृशा
दीर्घापाङ्गतरङ्गणैकसुहृदामेषोऽस्मि पात्रीकृतः ॥११॥

विदूषकः। ता एहि अणुसरह्म संदरीं। उब्भिज्जदु पेम्मदुद्दोणी धुट्टीअदु दिट्ठीए पीऊसगंडूसो दिज्जदु मअणस्स हत्थालंवो पअट्टदु पंचमझंकाराहिआरो भोदु विरहाउलो परिचारिआवग्गो मुच्छदु मअरद्धअसंधिविग्गहचिंता वावउदाए कंठट्ठिदजीविदो (स) चाराअणबह्मणो (१)।

---

(१) तदेहि अनुसरावः सुन्दरीम्। उद्भिद्यतां प्रेमदुद्रोणीः, पीयतां दृष्ट्या पीयूषगण्डूषं, दीयतां मदनस्य हस्तालम्बः, प्रवर्त्ततां पञ्चमझङ्काराधिकारो, भवतु विरहाकुलः परिचारिकावर्गो, मूर्च्छतु मकरध्वजसन्धिविग्रहचिन्ता व्यापृततया कण्ठस्थितजीवितश्चारायणब्राह्मणः।

---

(११) वक्त्रेति। अनया कामिन्या वक्त्रश्रिया मुखकान्त्या जितः जर्जरः अभिभूतः य इन्दुः तद्वत् मलिनं कन्दुकं करे कृत्वा क्रीड़ायां यत् कौतुकं तन्मिश्रो भावः यस्य तादृशं ताम्रम् आननं वहन्त्या भृङ्गैः ग्रयेषु उपरिभागेषु यः ग्रहः ग्रहणम् उपवेशनमिति यावत् तेन कष्टः क्लान्तः यः केतकदलः तस्य स्पर्द्धावतीनां तं स्पर्द्धमानानां तत्सदृशीनामिति यावत् तथा दीर्घयोरपाङ्गयोः यत् तरङ्गणं चलनं तत्र एकसुहृदाम् अद्वितीयबन्धूनाम् अनवरतापाङ्गचारिणीनामित्यर्थः दृशां नेत्राणाम् एषः अहं पात्रीकृतः अस्मि। उपमालङ्कारः। शार्दूलविक्रीड़ितं वृत्तम्।

(ख) पीयूषगण्डूषं गण्डूषपरिमितं पीयूषम् अमृतम्। पञ्चम-

( परिक्रम्य सोपानावतरणं नाटयतः )।

विदूषकः। अदेवं देवउलं अणक्खरो लेहो जदो ण दीसदि सा (२)।

राजा। दृष्टा हरिश्चन्द्रपुरी (ह) प्रनष्टा च।

विदूषकः। एहि णिउणं णिरूपह्म। सा कहिं पि तंभंतरिदा चिट्ठदि (३)। ( चतुर्दिशमवलोकितकेन )।

राजा। ( सविषादं भुवमवलोक्य )

---

(२) अदेवं देवकुलमनक्षरो लेखो यतो न दृश्यते सा।

(३) एहि निपुणं निरूपयावः। सा कुत्रापि स्तम्भान्तरिता तिष्ठति।

---

झङ्काराधिकारः पञ्चमः स्वरविशेषः झङ्कारः येषां तेषां कोकिलानामित्यर्थः अधिकारः कुहूरुतेषु इति भावः। विरहाकुलः विरहेण स्वामिविहीनतया नितान्तकातरः मदोत्सवस्य उद्दीपकत्वादिति भावः। परिचारिकावर्गः परिचारिकाश्च विदेशादागत्य त्यक्तस्वामिसङ्गाः प्रभुं परिचरन्तीत्यासां विरहाकुलत्वमिति भावः। मूर्च्छतु वर्द्धताम्। मकरध्वजसन्धिविग्रहचिन्ता मकरध्वजस्य कामस्य साम्प्रतं राज्याधिकारस्य वर्णनात् सन्धिविग्रहयोश्च राजकार्य्यत्वादित्याशयेनोक्तमिदम्। कुत्रचित् सन्धिः संयोगः सम्मेलनमित्यर्थः, कुत्र वा विग्रहः विसंवादः कलह इत्यर्थः कर्त्तव्य इत्यस्य चिन्ता विचार इत्यर्थः। व्यापृततया व्यस्ततया राजकार्य्येषु इति भावः, कण्ठस्थितजीवितः कण्ठे स्थितं जीवितं यस्य तादृशः अनवरतराजकार्य्यचिन्तनव्यग्रतया क्लान्तत्वादिति भावः।

(ह) हरिश्चन्द्रपुरी गन्धर्वनगरी ऐन्द्रजालिकी क्रियेव सा सहसा नश्यतीति भावः।

इयं चरणकुङ्कुमच्छुरितकुट्टिमा मेदिनी
निवेदयति कुन्दुरुव्यतिकरं कुरङ्गीदृशः ।
हहा किमिदमद्भुतं न च कृशोदरी दृश्यते
भवत्ववगतं स्मरः सृजति मोहमायामिमाम् ॥ १२ ॥
( सन्तोषमभिनीय समन्तादवलोक्य च )
शिखामणिरितोऽरुणस्तिलकयत्ययं मेदिनी-
मितो ललितगुम्फनास्तरलवेणिवान्ताः स्रजः ।
इतश्छुरितमन्तरं त्रुटितहारमुक्ताफलै-
रितः श्रवणपाशतश्च तलपत्रमास्ते च्युतम् ॥ १३ ॥
विदूषकः । सुट्ठु क्खु सुसण्णिवेसं विअ तालच्छदं ॥

---

( १२ ) इयमिति । चरणयोः कुङ्कुमेन अलक्तकेन छुरितः कुट्टिमः यस्यास्तादृशी मेदिनी कुरङ्गीदृशः अस्याः कामिन्याः कुन्दुरुव्यतिकरं कन्दुकविहरणसम्बन्धं निवेदयति सूचयति । हहा इति खेदे, कृशोदरी सा न च दृश्यते, इदं किम् अद्भुतम् आश्चर्यम् ? स्मरः कामः इमां मोहमायां मोहनकारिणीं मायां सृजति तनोति इति अवगतं ज्ञातं भवतु । पृथ्वीवृत्तं जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुरिति लक्षणात् ।

( १३ ) शिखेति । इतः अस्मिन् प्रदेशे अयम् अरुणः शिखामणिः चूड़ारत्नं मेदिनीं तिलकयति तिलकवत् भूषयति । इतः अस्मिन् प्रदेशे ललितं सुन्दरं ललितं त्रिषु सुन्दरमिति कोषः । गुम्फनं ग्रन्थनं यासां ताः स्रजः शिरोमाल्यानि तरलवेणेः चपलकेशपाशात् वान्ताः उद्गीर्णाः पतिता इत्यर्थः, इतः अन्तरम् अवकाशः त्रुटितैः स्खलितैः हारस्य मुक्ताफलैः छुरितं व्याप्तम् । इतश्च श्रवणपाशतः कर्णपाशात् च्युतं तलपत्रम् आभरणविशेषः आस्ते तिष्ठति । पृथ्वीवृत्तम् ।

( आदाय प्रसार्थ्य च ) कधं अक्खराइं पि पिअवअस्स जइ कालक्खरिओसि ( च ) ता पढ एदं ( १ ) ।

राजा । (वाचयति)—

* विधत्ते सोल्लेखं कतरदिह नाङ्गं तरुणिमा

तथापि प्रागल्भ्यं किमपि चतुरं लोचनयुगे ।

( विभाव्य ) अये ! द्विपदीयं न पुनरद्यापि चतुष्पदी ।

विदूषकः । पोगंडआ ( क ) विअ केच्चिरं उद्धजाणुअं चिट्ठिस्सामो । ता एहि मत्तवारणीए उअविसह्म ( २ ) )

( तथा कुरुतः नेपथ्ये )

यत्तालीदलपाकपाण्डु वदनं यद्दुर्दिनं नेत्रयो-

र्यत्प्रेङ्खोलितकेलिपङ्कजवनाः श्वासाः प्रसर्पन्ति च ।

---

( १ ) सुष्ठु, खलु सुवर्णनैपित मित्र तालच्छदम् । कथमक्षराण्यपि प्रियवयस्य ! यदि कालाक्षरिकोऽसि तत्पठ, एतत् ।

( २ ) पोगण्डा इव कियच्चिरमूर्द्ध्वजानुकं स्थास्यामः । तदेहि मत्तवारण्यामुपविशावः ।

---

( च ) कालाक्षरिकः कालं कृष्णवर्णम् अक्षरं वेत्तीति कालाक्षरिकः कृष्णवर्णमसीलिखिताक्षरस्य इत्यर्थः ।

* विधत्त इति । प्रथमपादः पूर्वं व्याख्यातः । तथा तादृगयस्य अङ्गोल्लेखनविधायित्वे सति लोचनयुगे नयनद्वये किमपि अनिर्देश्यनीयं चतुरं प्रागल्भ्यं वैदग्ध्यम् अपि स्यादिति शेषः ।

(क) पोगण्डाः विकलाङ्गाः । मत्तवारण्यां कपोतपालिकायाम् ।

( १४ ) यदिति । यत् यस्मात् ते तव वदनं तालीदलस्य यः पाकः पचनं पक्वतालीदलमित्यर्थः क्तप्रत्ययाभिहितो भावो द्रव्यवत् प्रकाशते इति

गौरी क्रुध्यतु वर्त्तते यदि न ते तत् कोऽपि चित्ते युवा
धिक् धिक् त्वां खलु पांसुखेलनसखीलोकेऽपि यन्निह्नवः ॥१४

विदूषकः। (चमत्कृत्य) भो सिहाबंधं (ख) करेहि अमाणुसी वाणी सुणीअदि (१)।

राजा। भित्त्यन्तरितः कश्चिदभिधत्ते।

विदूषकः। भो वक्खाणेहि मे (२)।

---

(१) भो शिखाबन्धं कुरु, अमानुषी वाणी श्रूयते।
(२) भो व्याचक्ष्व मे।

---

न्यायात् तद्वत् पाण्डु, यत् नेत्रयोर्दुर्दिनं वर्षणम् अश्रुपात इत्यर्थः अप्रसन्नता वा, यच्च प्रेङ्खोलितम् आन्दोलितं केलिपङ्कजवनं क्रीड़ापद्मखण्डं यैः तथोक्ताः श्वासाः निश्वासमारुताः प्रसर्पन्ति वहन्ति च तत् तस्मात् ते तव चित्ते कोऽपि युवा वर्त्तते इति शेषः, यदि न एतत् सत्यं न चेदित्यर्थः तदा गौरी भगवती पार्वती क्रुध्यतु मह्यमिति शेषः अहं गौर्य्याः क्रोधरूपं शपथं कृत्वा वदामि ते चित्ते कोऽपि युवा अस्तीति भावः। पांसुखेलनसखी लोके धूलिखेलनसङ्गिनीषु सखीष्वित्यर्थः यत् निह्नवः गोपनं सख्योऽपि तव ईदृशं भावं न विदन्तीति यदित्यर्थः अतस्त्वां धिक् धिक् खलु पुनः पुनर्निन्दामि खलु धिक् निर्भत्सननिन्दयोरित्यमरः ईदृशी अवस्था सखीषु प्रकटयितुमुचितेति नोचेत् आत्महानिर्नितरां दुर्वारेति निन्दावसर इति भावः। अत्रानुमानमलङ्कारः। तदुक्तं दर्पणे, अनुमानन्तु विच्छित्त्या ज्ञानं साध्यस्य साधनादिति। शार्दूलविक्रीड़ितं वृत्तम्।

(ख) शिखाबन्धं कचबन्धनम् अरिष्टविनाशार्थं कचाः सम्यग् बध्यन्ते इति प्रसिद्धिः।

राजा । काचित् क्वचिदनुरक्ता लज्जावती च वयस्य ! भिन्नरहस्या (ग) क्रियते ।

नेपथ्ये । (सवाक्स्तम्भम् ) सहीओ ! किं एत्थ अलिअं (घ) संभाविअ ( २ ) ?

राजा । वयस्य ! श्रुतम् ।

विदूषकः । हीही भो एदं क्खु पंडिदा अलिअविअप्पेहिं फलचुक्का विअ मक्कला मूलमलहंता पल्लवग्गाहिणो होन्ति, मुक्खा उण फणसवणपालआ विअ मूलमणुसरंता फलं पावंति, ता सुणु अब्बुदं ज्जेव्व वक्खाणइस्सं । ण क्खु एदं सामण्णजणवअणं तुमं ज्जेव्व भणीअसि ण क्खु मिअलंछणसुभ्भ्मीअ ससिकंतपुत्तलिआ बद्धणिभ्भरा प्पसरदि ( १ ) ।

---

( २ ) सख्यः ! किमत्रालीकं सम्भाव्यते ?

(१) हीही भो एतद् खलु पण्डिता अलीकविकल्पैर्विच्युतफला इव मर्कटा मूलमलभन्तः पल्लवग्राहिणो भवन्ति । मूर्खाः पुनः पनसवनपालका इव मूलमनुसरन्तः फलं प्राप्नुवन्ति, तत् शृणु अद्भुतमेव व्याख्यास्यामः । न खलु एतत् सामान्यजनवचनं त्वमेव भण्यसे न खलु मृगलाञ्छनसम्भ्रम्य शशिकान्तपुत्तलिकाबद्धनिर्भरा प्रसरति ।

---

( ग ) भिन्नरहस्या भिन्नं रहस्यं यस्याः सा प्रकटितमनोभावेत्यर्थः ।

( घ ) अलीकविकल्पैः वृथासंशयैः । अद्भुतमित्यत्र अद्भुतमिति पाठः साधुः । बद्धनिर्भरा अन्तर्गतजलपूर्णा प्रसरति स्रवति चन्द्रकरस्पर्शेनैव चन्द्रकान्तमणिर्द्रवतीति भावः ।

राजा। तदिदं तर्के, अनाकरे (ङ) पद्मरागरत्नम्।

( पुनर्नेपथ्ये )

कहं तक्कालप्फुड़िदसिप्पिसंपुडुम्मुक्कमोतिअच्छाआ।
थक्कंतु तुह धोअंजणाणं णअणाणं बाहकणा ॥ १५ ॥
सक्किसिहि कहं णु पेक्खिदुं पारदरसच्छित्तकंचणच्छाअं।
तणुकदलीए परिपंडुरत्तणं डिंभहरिणच्छि ॥ १६ ॥
कहं णु तए तरलिज्जंति केलिपंकेरुहग्गक्खलणेण।
णीसास कट्ठिअ हारलट्ठिसंठाणवरिमाणा ॥ १७ ॥

---

कथं तत्कालस्फुटितशुक्तिसंपुटोन्मुक्तमौक्तिकच्छायाः।
विरमन्तु तव धौताञ्जनयोर्नयनयोर्बाष्पकणाः ॥ १५ ॥
शक्ष्यते कथं नु प्रेक्षितुं पारदरसच्छिन्नकाञ्चनच्छायम्।
तनुकदल्याः परिपाण्डुरत्वं डिम्भहरिणाक्षि ! ॥ १६ ॥
कथं नु त्वया तरलीयन्ते केलिपङ्केरुहाग्रस्खलनेन।
निःश्वासाः कष्टा हारयष्टिसंस्थानपरिमाणाः ॥ १७ ॥

---

( ङ ) अनाकरे खनिं विना इत्यर्थः।

( १५ ) कथं तदिति। तत्काले सद्य एव स्फुटितात् विकसितात् शुक्तिसम्पुटात् उन्मुक्तानि यानि मौक्तिकानि तेषामिव छाया कान्तिर्येषां तथाभूताः बाष्पकणा अश्रुविन्दवः धौतं बाष्पाम्बुपतनात् प्रक्षालितम् अञ्जनं कज्जलं ययोः तयोस्तयोः नयनयोः विरमन्तु निवर्त्तन्तां मा रुदिहि इत्यर्थः।

( १६ ) शक्यते इति। हे डिम्भहरिणाक्षि ! बालकुरङ्गाक्षि ! तनुकदल्याः पारदरसेन छिन्नं यत् काञ्चनं तस्येव छाया यस्य तादृशं परिपाण्डुरत्वं कथं नु वितर्के प्रेक्षितुं द्रष्टुं शक्यते नैव शक्यते इत्यर्थः; अयमेतादृशी पाण्डुरासीति वदेति भावः।

( १७ ) कथमिति। नु वितर्के, त्वया केलिपङ्केरुहस्य लीला-

पसिढिलणीविअकंचुअत्तणं कहं णु प्फुरइ देहदोव्बल्लं ।
अंगं पुण दिनहरिणंकबिंबपरिपंडुरं कहं णु होइ ॥ १८ ॥
इअ तुह विज्जाहरमल्लदंसणेण प्फुडमिमाओ भंगीओ ।
ण विणा चंदं सेहालिआए विअसंति कुसुमाइं ॥ १९ ॥

विदूषकः । सिविणवदिठ्ठा दोलणदोलिणी (च) विद्ध-संचारिदसालभंजिअत्तणेण त्थलतरे परिणदा गेंदुअखेलिणी

---

प्रशिथिलनीविककञ्चुकत्वं कथं नु स्फुरति देहदौर्बल्यम् ।
अङ्गं पुनर्दिनहरिणाङ्कबिम्बपरिपाण्डुरं कथं नु भवति ॥ १८ ॥
इह तव विद्याधरमल्लदर्शनेन स्फुटमिमा भङ्ग्यः ।
न विना चन्द्रं शेफालिकाया विकसन्ति कुसुमानि ॥ १९ ॥

---

कमलस्य अपस्खलनेन उपरिपतनेन अनुमिता इति शेषः हारयष्टेः हारलतायाः संस्थानस्य आकृतेरिव परिमाणं येषां तथाभूताः कष्टाः क्लेशकरा निश्वासाः कथं तरलीयन्ते चञ्चलीक्रियन्ते ? मनः सन्तापेन दीर्घा निश्वासाः पतन्तीति भावः ।

(१८) प्रशिथिलेति । नु वितर्के प्रशिथिलनीविकं नीवी वसनग्रन्थिः तस्याः प्रशिथिलं प्रस्खलितं कञ्चुकं यस्मिन् तादृशं देहदौर्बल्यं कथं स्फुरति एतादृशं ते शरीरदौर्बल्यं, यत् नीव्या अपि वसनकञ्चुकं परिस्खलतीति भावः । अङ्गं पुनः शरीरञ्च अयं दिनहरिणाङ्कबिम्बपरिपाण्डुरं दिवसचन्द्रबिम्बधूसरं भवति ।

(१९) इहेति । इह अस्मिन् विद्याधरमल्लस्य दर्शनेन स्फुटं नूनम् इमा भङ्ग्यः विभ्रमा जाता इति शेषः । चन्द्रं विना शेफालिकायाः कुसुमानि न विकसन्ति । अत्र दृष्टान्तालङ्कारः । तदुक्तं दर्पणे, दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति ।

(च) विद्धेति । विद्धा सम्यग्निबद्धा सञ्चारिता स्थानान्तरं नीता च शालभञ्जिका पुत्तलिका तस्या भावः तेन ।

कअकव्वबंधरअणा सा ज्जेव एसा तुए आलक्खिदा तुह चित्तं अक्खिवदि (१)।

नेपथ्ये। सहि मिअंकावलि! ता मए संपदं णिसठ्ठत्थाए (क) दूदीए होदव्वं (२)।

राजा। सैवेयमस्मन्मनसि मन्मथेनेदानीमुत्कीर्य्यते मृगाङ्कावलीति पञ्चाक्षरी (ज)।

नेपथ्ये। रइदा अ मए तुहावत्थाणिवेदणत्थं महाराअपुरदो पढणिज्जा दुवे सिलोआ ते पियसहीए सुणीअदु (३)।

(संस्कृतमाश्रित्य)

---

(१) स्वप्रदृष्टा दोलान्दोलिनी विद्धसञ्चारितशालभञ्जिकात्वेन स्थलान्तरे परिणता गेन्दुकखेलिनी कृतकाव्यबन्धरचना सैवैषा त्वया आलक्षिता तव चित्तमाक्षिपति।

(२) सखि मृगाङ्कावलि! तन्मया साम्प्रतं निसृष्टार्थया दूत्या भवितव्यम्।

(३) रचितौ च मया तवावस्थानिवेदनार्थं महाराजपुरतः पठनीयौ द्वौ श्लोकौ तौ प्रियसख्या श्रूयताम्।

---

(क) निसृष्टार्थया उभयोर्भावमनुसारिकार्य्यमाचरन्त्या तदुक्तं दर्पणे उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम्। सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थस्तु स स्मृत इति।

(ज) पञ्चाक्षरी पञ्चानाम् अक्षराणां समाहारः पञ्चाक्षरी समाहारद्विगुसमासः।

चन्द्रं चन्दनकर्दमेन लिखितं संमार्ष्टि दष्टाधरा
कामः पुष्पशरः किलेति सुमनोवर्गं लुनीते च यत्।
वन्द्यं निन्दति यच्च मन्मथमसौ भङ्क्त्वाग्रहस्ताङ्गुली-
स्तत्कामं सुभग! त्वया वरतनुर्वातूलतां लम्भिता ॥ २० ॥

अपि च,

तापोऽस्याः प्रकृतिंपचः प्रचयवान् वाष्पः प्रणालोचितः
श्वासाः कम्पितदीपवर्त्तिकलिकाः पाण्डिम्नि मग्नं वपुः।
किञ्चान्यत् कथयामि रात्रिमखिलां त्वन्मार्गवातायने।
हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्त्तते ॥ २१ ॥

---

(२०) चन्द्रमिति। हे सुभग! असौ वरतनुः वराङ्गी चन्दनकर्दमेन चन्दनरसेन लिखितं त्वद्विरहविनोदनार्थमिति भावः चन्द्रं सम्मार्ष्टि नासौ त्वन्मुखसदृश इति बुद्ध्या प्रोञ्छतीत्यर्थः किञ्चेति चार्थः कामः पुष्पशरः किल इति दष्टाधरा पुष्पं गृहीत्वा किमिदं कामशरो गृहीतमिति अधरं दशन्ती सती सुमनोवर्गं पुष्पवृन्दं लुनीते छिनत्ति। यच्च अग्रहस्ताङ्गुलीः भङ्क्त्वा वन्द्यं मन्मथं निन्दति तत् तस्मात् असौ मत्सखी त्वया वातूलतां क्षिप्तताम् उन्मत्ततां लम्भिता नीता। शार्दूलविक्रीडितं वृत्तम्।

(२१) ताप इति। किञ्च तापः अन्तःसन्तापः अस्याः प्रकृतिंपचः जलगण्डूषशोषकः। प्रचयवान् अतिप्रवृद्धः बाष्पः प्रणालोचितः प्रकृष्टनालवहनोपयुक्तः। श्वासाः निश्वाससमीरणाः कम्पिता दीपानां वर्त्तिकलिका यैः तथाभूताः, वपुः शरीरं पाण्डिम्नि पाण्डुतायां मग्नं नितरां पाण्डुरमित्यर्थः। किमन्यत् कथयामि अखिलां सर्वां रात्रिं व्याप्य हस्त एव छत्रं तेन निरुद्धं निवारितं चन्द्रस्य महः तेजः यया तथाभूतायाः तस्याः त्वन्मार्गवातायने तव मार्गगवाक्षे स्थितिः अवस्थानं

विदूषकः। अहं उण जाणि अणुप्पविस्सीअ अह्मे छलि-दुमिह सुवण्णचउक्किआसंक्कंता के वि बह्मरक्खसा जप्पंति। भूअप्पिआ अ संझा सण्णिहिदा वट्टदि, ता ओदरह्म (१)।

राजा। यथाह भवानिति उभाववतरणं नाटयतः।

नेपथ्ये। सुखाय सायन्तनसन्ध्या भवतु देवस्य। सम्प्रति हि—

निर्यद्वासरजीवपिण्डकरुणां बिभ्रत्कवोष्णैः करै-
र्माञ्जिष्ठं रविबिम्बमम्बरतलादस्ताचलं चुम्बति।
किञ्च स्तोकतमः कलापकलनाश्यामायमानं मनाग्
धूमश्यामपुराणचित्ररचनारूपं जगज्जायते॥ २२॥

---

(१) अहं पुनर्जाने अनुप्रविश्यास्मान् छलितुमिह सुवर्णचतुष्का-कासंक्रान्ताः केऽपि ब्रह्मराक्षसा जल्पन्ति। भूतप्रिया च सन्ध्या संनिहिता वर्त्तते, तदवतरामः।

---

वर्त्तते वीरवरमसौ गवाक्षवर्त्तिनी तव मार्गमीक्षते इत्यर्थः। शार्दूल-विक्रीड़ितं वृत्तम्।

(२२) निर्यदिति। कवोष्णैः ईषदुष्णैः करैः किरणैः निर्यतः निर्गच्छतः वासरस्य दिवसस्य जीवपिण्डेषु जीवनेषु करुणां बिभ्रत् वहत् माञ्जिष्ठं मञ्जिष्ठारागेणेव रञ्जितं रविबिम्बम् अम्बरतलात् अस्ताचलं चुम्बति। किञ्च जगत् स्तोकेन अल्पेन तमःकलापेन तिमिरपुञ्जेन कलनात् आक्रमणात् आश्यामायमानम् ईषत् श्याममिव आभासमानम् अत एव मनाक् ईषत् धूमेन श्यामा या पुराणचित्ररचना तुल्या इव रूपं यस्य तथाभूतं जायते। शार्दूलविक्रीड़ितं वृत्तम्।

अपि च,

सैरिन्ध्री करक्लृष्टकङ्कणसरद्धीरध्वनिः सञ्चरद्
दूतीसूचितसन्धिविग्रहविधिः सोल्लासलीलाधरः ।
वारस्त्रीजनसज्ज्यमानशयनः सन्नद्धपुष्पायुधः
श्रीखण्डद्रवधौतसौधतलिमो रम्यः क्षणो वर्त्तते ॥२३॥

राजा । सन्ध्यामुपासितुं देवीभवनमेव गच्छामः ।

( इति निष्क्रान्तौ ) ।

इति श्रीकविराजराजशेखरविरचितायां
विद्धशालभञ्जिकाभिधनाटिकायां द्वितीयोऽङ्कः ।

---

(२३) सैरिन्ध्रीति । सैरिन्ध्रीणां परवेश्मवासिनीनां शिल्पकारीणां करैः क्लृष्टेभ्यः कङ्कणेभ्यः त्वरातिशयादिति भावः सरन् उच्चरन् धीरः गम्भीरः ध्वनिर्यस्मिन् तथोक्तः, सञ्चरन्तीभिः इतस्ततो धावन्तीभिः दूतीभिः सूचिताः आरब्धाः सन्धिविग्रहविधयः सम्मेलनकलहव्यापारा यस्मिन् तथाभूतः, सोल्लासां सविलासां लीलां धरतीति तथोक्तः, वारस्त्रीजनैः वेश्याभिः सज्ज्यमानानि शयनानि यस्मिन् सः, सन्नद्धः समुद्यतः पुष्पायुधः कामो यत्र तादृशः, तथा श्रीखण्डद्रवैः चन्दनरसैः धौतानि क्षालितानि तलिमानि शय्यातलानि यस्मिन् तथाभूतः रम्यः क्षणः समयः वर्त्तते । शार्दूलविक्रीडितं वृत्तम् ।

# अथ तृतीयोऽङ्कः ।

( ततः प्रविशति चेटी ) ।

चेटी । ( परिक्रम्य ) को विअ कालो वट्टदि पिअसहीए विअक्खणाए दिट्ठाए उक्कंठाभरेण अ ससिअरकरं विज्जमाणं विअ करिदंतमुसलं फुट्टणभूइट्ठं वट्टदि मे हिअअं, ता कहिं क्खु तां पेक्खिस्सं (पुरोऽवलोक्य) कधं एसा पियसही किं पि मंतअंती आअच्छदि ( १ ) ।

( ततः प्रविशति यथानिर्दिष्टा द्वितीया चेटी ) ।

चेटी । (स्वगतम्) अहो महामंतिणो पहुकज्जे णिरदिसआ भत्ती ( २ ) ।

प्रथमा । कधं महाभाअधेअजणकज्जसिद्धी विअ चिंतिदोवणदा पिअसही । (स्वगतम्) ता पच्छा भविअ णअणाइं से पिहाइस्सं ( ३ ) । (तथा करोति) ।

द्वितीया । पिअसहीए सुलक्खणाए विअ करप्फंसो

---

( १ ) कोऽपि च कालो वर्त्तते प्रियसख्या विचक्षणाया दृष्टाया उत्कण्ठाभरेण च शशिकरकरं व्यज्यमानमिव करिदन्तमुसलं स्फुटनभूयिष्ठं वर्त्तते मे हृदयं, तत् कुत्र खलु तां प्रेक्षिष्ये । कथमेषा प्रियसखी किमपि मन्त्रयन्ती आगच्छति ।

( २ ) अहो महामन्त्रिणः प्रभुकार्य्ये निरतिशया भक्तिः ।

( ३ ) कथं महाभागधेयजनकार्य्यसिद्धिरिव चिन्तितोपनता प्रियसखी, तत्पश्चाद्भूत्वा नयनान्यस्याः पिधास्ये ।

(प्रकाशम्) सहि सुलक्खणे! जाणिदासि ता मुंच णअणाइं (१)।

सुलक्षणा। (नयने परित्यज्य सप्रणयकोपम्) हला विअक्खणे! एद्दहमेत्ते वि सलिलसित्तसणगुणगेंठिगाढे वि सिणेहे कधं उब्भिन्नसिहा (क) खंजरीटी विअ अदंसणा चिट्ठसि? ता एसा दे कुविस्सं (२)।

विचक्षणा। (सप्रश्रयम्) (ख)। पिअसहि सुलक्खणे! मा कुप्य, महामंतिभागुराअणणिओओ एत्थ अवरज्झदि ण अहं (३)।

सुल। (सोपहासम्) को तुह्माहिंतो अणो (ग) छगुणअनिउणो? (४)।

---

(१) प्रियसख्याः सुलक्षणाया इव करस्पर्शः। सखि सुलक्षणे! ज्ञातासि, तन्मुञ्च नयनानि।

(२) हला विचक्षणे! एतावन्मात्रेऽपि सलिलसिक्तशणगुणग्रन्थिगाढेऽपि स्नेहे कथमुद्भिन्नशिखाखञ्जरीटीवादर्शना तिष्ठसि? तदेषा ते कुपिष्ये।

(३) प्रियसखि सुलक्षणे! मा कुप्य, महामन्त्रिभागुरायणनियोगोऽत्रापराध्यति न पुनरहम्।

(४) को युष्मत्तोऽन्यः षाड्गुण्यनिपुणः?

---

(क) उद्भिन्नशिखा उदितशिरोरुहा खञ्जरीटी खञ्जनपक्षिणी। खञ्जनस्य शिखोदये नीडात् निःसरणं प्रसिद्धम्।

(ख) सप्रश्रयं सविनयम्।

(ग) षाड्गुण्यनिपुणः षण्णां गुणानां सन्धिविग्रहयानासनद्वैधी-

विच । अह्मारिसजणजोग्गं महिलाछगुणअं क्खु एदं (१)।

सुल। महिलाछगुणएण जइ महिलाअणस्स (घ) अदंसणं ता अह्मारिसीओ अक्खिहिं वि ण दीसंति (२)।

विच । अध दे कीदिसं महिलाछगुणअं ? (३)।

सुल । तुमं भण दाव उण अहं भणिस्सं, पठमं सह-आरमंजरीओ उब्भिज्जंति पच्छा ता चुंविणी कलअंठी (ङ) कंठमुद्दं सिठिलीकरेदि (४)।

विच । ता सुणु – अहमेअदा भअवदा भागुराअणेण सबहुमाण भणिदा, जधा, विअक्खणे ! तुए अह्माणं राअ-रहस्से सहाज्जं कादव्वंन्ति (५)।

---

(१) अस्मादृशजनयोग्यं महिलाषाड्गुण्यं खल्वेतत् ।

(२) महिलाषाड्गुण्येन यदि महिलाजनस्यादर्शनं ततोऽस्मा-दृश्योऽक्षिभिरपि न दृश्यन्ते ।

(३) अथ ते कीदृशं महिलाषाड्गुण्यम् ?

(४) त्वं भण तावत् पुनरहं भणिष्ये, प्रथमं सहकारमञ्जर्य्य उद्भिद्यन्ते पश्चात्तच्चुम्बिनी कलकण्ठी कण्ठमुद्रां शिथिलीकरोति ।

(५) तत् शृणु—अहमेकदा भगवता भागुरायणेन सबहुमानं

---

भावसमाश्रयरूपाणां समाहारः षड्गुणं तदेव षाड्गुण्यं तत्र निपुणः विचक्षणः ।

(घ) महिलाजनस्य तव इति भावः ।

(ङ) कलः मधुरः कण्ठो यस्याः सा कोकिलेत्यर्थः कण्ठमुद्रां कण्ठस्य स्तब्धीभावम् ।

सुल। अहो दे मतिविहवो (च) जेण महामंती वि एदं संभावेदि। का वसना वकुलावली सुरहिगंधुग्गार त्ति (१)।

विच। यदो विणओवणदाए मए तधेत्ति पडिवसं, (छ) कधिदं अ मे तेण, जधा, एसो जो मिअंकवम्मा मिअंकावलीत्ति (२)।

सुल। तदो तदो (३)?

विच। तदो तं परिणीअ महाराअसिरिविज्जाहरमल्लदेवेण महिअलचक्कवत्तिणा होदव्वं, ता तुए तस्स कदाचिद् किदभवणभित्तिसंचारे (ज) वासहरे दंसिदेव्व, जेण देवस्स सिविणआवगमो होदि, कज्जंतरट्ठाणाइं दे

---

भविता, यथा विचक्षणे! त्वयाऽस्माकं राजरहस्ये साहाय्यं कर्त्तव्यमिति।

(१) अहो ते मतिविभवो येन महामन्त्र्यपि एतत् सम्भावयति। का वर्णना वकुलावली सुरभिगन्धोद्गारेति।

(२) यतो विनयोपनतया मया तथेति प्रतिपन्नं, कथितं च मे तेन, यथा, एष यो मृगाङ्कवर्मा सा मृगाङ्कावलीति।

(३) ततस्ततः?

---

(च) मतिविभवः बुद्धिप्रभावः। एतं मतिविभवं सम्भावयति सम्मानयति। वकुलावलीति वकुलावलीस्थः सुरभिर्वायते इति किं वक्तव्यमिति भावः।

(छ) प्रतिपन्नं करिष्यामि भवतः साहायकमिति अङ्गीकृतमित्यर्थः।

(ज) कृतभवनभित्तिगर्भसञ्चारे कृतः भवनभित्तिगर्भे सञ्चारो यस्मिन्

हरदासो कधइस्सदि, एदस्सिं महाराअकज्जरहस्से तुमं तीए वि पिअसही तत्थ राअकज्जसाहज्ज विअ अत्थीअसि ण हु सोवाणवंतिमंतरेण बलहीए समारोहो। मए तदो हरदासकधिदकज्जाणुसारेण सा सविस्संभं भणिदा, जधा, सहि मिअंकावलि! इह वासहरे मकरद्धओ ओदरदि, तं अ दट्ठूण कंटाहिकट्ठिदेण हारकुसुमदामेण तुए अच्चिदव्वो, जेण दे एदादिसो कंतो होदि, तए वि तह अब्भुवअदं, किदं अ, उण हिंदोलए दंसिदा, केलिकैलासभवणे सुट्ठिदप्फलिहभित्तिसु अत्तणो चित्तं लेहाविदा, थंभगब्भसंचारेण तत्तद् भणाइदा पढाविदा अ (४)।

---

(४) ततस्तां परिणीय महाराजश्रीविद्याधरमल्लदेवेन महीतलचक्रवर्त्तिना भवितव्यं तत्त्वया तस्य कदाचित् क्षतभवनभित्तिगर्भसञ्चारे वासगृहे सा दर्शयितव्या, येन देवस्य सम्भावगमो भवति, कार्य्यान्तरस्थानानि ते हरदासः कथयिष्यति, एतस्मिन् महाराजकार्य्यरहस्ये त्वं तस्या अपि प्रियसखी तत्र राजकार्य्यसाहाय्यमिवार्थ्यसे, न खलु सोपानपङ्क्तिमन्तरेण वलभ्यः समारोहः। मया ततो हरदासकथितकार्य्यानुसारेण सा सविस्रम्भं भणिता, यथा, सखि मृगाङ्कावलि! इह वासगृहे मकरध्वजोऽवतरति तं च दृष्ट्वा कण्ठाकृष्टेन हारकुसुमदाम्ना

---

तथाभूते वासगृहे। तस्या अपि मृगाङ्कवत्याः प्रियसखी, तत्र मृगाङ्कावल्यां राजकार्य्यसाहाय्यम् इव अर्थ्यसे प्रार्थ्यसे। सोपानपङ्क्तिं कौशलमिति भावः अन्तरेण विना समारोहः सम्यक् आरोहणं कार्य्यानुष्ठानमिति भावः न खलु नैव अवलभ्यः कर्त्तव्य इत्यर्थः। कण्ठाकृष्टेन कण्ठात् आकृष्टेन अर्चयितव्यः पूजनीयः मकरध्वज इति शेषः। कान्तः पतिः। अभ्युपगतम् अङ्गीकृतम्।

सुल। अध तं विविहेहिं विलासेहिं पेक्खंतेण (झ) महाराएण किं पडिवस्सं (१) (

विच। जं केलिअरिणी (ञ) चाडुकम्मच्छलिदो रसकरी पडिवज्जेदि, तदो तरुणफोफलिछोल्लिदद्दविड़सामलीदंतपंतिविसदासु मुद्धससिजामिणीसु असमंजसं विप्पलवदि, तधा तं (२)।

(संस्कृतमाश्रित्य)

ज्योत्स्नीं श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-

---

त्वयार्जयितव्यः, येन ते एतादृशः कान्तो भवति, तयापि तथाऽभ्युपगतं, अतश्च, पुनर्हिन्दोलायां दर्शिता केलिकैलासभवने सुस्थितस्फटिकभित्तिषु आत्मनश्चित्रं लेखिता सम्भ्रमगर्भसञ्चारेण तत्तद् भणायिता पाठिता च।

(१) अथ तां विविधैर्विलासैः प्रेक्षता महाराजेन किं प्रतिपन्नम् ?

(२) यत् केलिकारिणीचाटुकर्मच्छलितोऽरस्यकरी प्रतिपद्यते, ततस्तरुणपूगत्वगधर्षितद्राविड़श्यामलीदन्तपङ्क्तिविशदा सुमुग्धशशियामिनीषु असमञ्जसं विप्रलपति, तथा तत्।

---

(झ) प्रेक्षता पश्यता। प्रतिपन्नं व्यवसितम्।

(ञ) केलिकरिणीचाटुकर्मच्छलितः केलिकारिण्या पोषितहस्तिन्या चाटुकर्मणा प्रियकार्य्यसाधनेन छलितः प्रतारितः। तरुण्या अभिनवया पूगत्वचा धर्षिता तिरस्कृता या द्रविड़श्यामलीदन्तपङ्क्तिः द्रविड़देशीश्यामास्त्रीदशनराजिः तद्वत् विशदासु निर्मलासु मुग्धशशियामिनीषु सुन्दरशुक्लरजनीषु तथा तत् विप्रलपति विशेषेण प्रलापं करोति इत्यर्थः।

(१) प्रलापप्रकारमाह ज्योत्स्नीमिति। भो इति किङ्करसम्बोधनं

मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां स्मितम्।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः॥ १॥

सुल। तीए उण का अवत्था वट्टदि? (१)।

विच। (संस्कृतमेवाश्रित्य)

सौधादुद्विजते त्यजत्युपवनं द्वेष्टि प्रभामैन्दवीं
द्वारात् त्रस्यति चित्रकेलिसदसो वेशं विषं मन्यते।
आस्ते केवलमब्जिनीकिसलयप्रस्तारशय्यातले
संकल्पोपनमत्तदाकृतिरसायत्तेन चित्तेन सा॥ २॥

---

(१) तस्याः पुनः काऽवस्था वर्त्तते?

---

हे किङ्कराः! ज्योत्स्नीं चन्द्रिकामयीं रजनीं सान्द्रैः घनैः मसीकूर्चकैः मसीपुञ्जैः श्यामलिमानं श्यामताम् आनयत प्रापयत, अथ अनन्तरं मन्त्रं तन्त्रं प्रयुज्य श्वेतोत्पलानां स्मितं विकाशं हरत यथा तानि न विकसेयुः तथा तन्त्रमन्त्रौ प्रयुञ्जीध्वमित्यर्थः। तथा चन्द्रं शिलापट्टके क्षणात् कणशः कृत्वा चूर्णयत चूर्णं कुरुत येन अहं तस्याः रमण्याः अप्रलब्धाया इति भावः वक्त्रस्य मुखस्य मुद्रया अङ्किताश्चिह्निताः दशदिशः द्रष्टुं क्षमे शक्नोमि तन्मयत्वाद्दशदिशामिति भावः ज्योत्स्नादीनान्तु अतीवोद्दीपकत्वेन दिग्दर्शनव्याघातकत्वात् तत्तन्निवारणोक्तिरिति भावः। शार्दूलविक्रीडितं वृत्तम्।

(२) सौधादिति। सा मृगाङ्कावली सौधात् हर्म्यात् उद्विजते उद्विग्ना भवति, उपवनं त्यजति, ऐन्दवीं प्रभां द्वेष्टि, चित्रकेलिसदसः चित्रितकेलिगृहस्य द्वारात् त्रस्यति बिभेति, वेशं परिच्छदं विषं मन्यते च। केवलं सङ्कल्पेन उपनमता उपस्थितेन तस्य राज्ञः आकृतौ यः रसः आस्वादः तदायत्तेन तदधीनेन चित्तेन मनसा अब्जिनीनां

संपदं उण तुमं कधेहि कीदिसं तं महिलाछगु-सअं ? (१)।

सुल। सुणु जादिसं। एकदाहं महाराएण कसे सप्पसादमादिट्ठा, जधा, ण तुए भिसरहस्सा (ट) देवी कादव्व त्ति (२)।

विच। किं विअ तं ? (३)।

सुल। तं जधा, अलिअविवाहविलक्खो (ठ) चाराअणो देवी धात्तेइं वि प्पदारिदुमिच्छदि। ता दिणावसाणसमए तरुणनीरंधअंधआरे केसरतरुमारुहिअ प्पमदुज्जाणमज्झगामिणी तए मेहला साणुणासिअं भणिदव्वा, जधा अयि मेहले! इह वेसाहपुण्णिमाप्पदोसे ज्जेव तुए मरिदव्व'ति भणिदा अ सा (४)।

---

(१) साम्प्रतं पुनस्त्वं कथय कीदृशं तन्महिलाषाड्गुण्यम् ?

(२) शृणु यादृशम्। एकदाहं महाराजेन कर्णे सप्रसादमादिष्टा, यथा, न त्वया भिन्नरहस्या देवी कर्त्तव्येति।

(३) किमिव तत् ?

(४) तद् यथा, अलीकविवाहविलक्षश्चारायणो धात्रेयीमपि प्रतारयितुमिच्छति। तद्दिनावसानसमये नीरन्ध्रान्धकारे केसरतरुमारुह्य

---

पद्मिनीनां किसलया एव प्रस्तारा आस्तरणानि यस्य तादृशे शय्यातले आस्ते तिष्ठति। शार्दूलविक्रीड़ितं वृत्तम्।

(ट) भिन्नरहस्या भिन्नं प्रकाशितं रहस्यं यस्यै तत्।

(ठ) अलीकविवाहविलक्षः अलीकेन मिथ्याभूतेन विवाहेन विलक्षः लज्जितः। केसरतरुं वकुलपादपम्। सानुनासिकं प्रेतोक्तिरूपेण इत्यर्थः।

विच। तदो तदो (१)?

सुल। तदो तीए सज्झसवसवेविदंगीए कधं कधं पि तदोहिमुहं भविअ किदणिविड्ञ्जलिसंपुडाए भणिदं, भअवदि असरीरिणि दिव्वे वाणि! मं अणुकंपंतीए जधा मरणं तुए जाणिदं जीविदं वि मे जाण (२)।

विच। तदो तदो? (३)।

सुल। तदो तधा ज्जेवं कहिदं, जइ गंधव्ववेअविअक्खणं (ङ) बह्मणं गुरुणा सक्कारेण अहिणंदिअ पाएसुवलंयती यन्तरमज्झदुआरेण सञ्चरदि तदा जीवितलंभो त्ति (४)।

---

प्रमोदोद्यानमध्यगामिनी त्वया मेखला सान्त्वनाविकं भणितव्या, यथा, अयि मेखले! इह वैशाखपूर्णिमाप्रदोष एव त्वया मर्त्तव्यमिति भणिता च सा।

(१) ततस्ततः?

(२) ततस्तया साध्वसवशवेपिताङ्ग्या कथं कथमपि ततोऽभिमुखं भूत्वा कृतनिविड़ाञ्जलिसंपुटया भणितं, भगवति अशरीरिणि दिव्यवाणि! मामनुकम्पयन्त्या यथा मरणं त्वया ज्ञातं जीवितमपि मे जानीहि।

(३) ततस्ततः?

(४) ततस्तथैव कथितं, यदि गान्धर्ववेदविचक्षणं ब्राह्मणं गुरुणा सत्कारेणाभिनन्द्य पादयोः पतन्ती जङ्घान्तरमध्यद्वारेण सञ्चरति तदा जीवितलम्भ इति।

---

(ङ) गान्धर्ववेदविचक्षणं गान्धर्ववेदेषु नृत्यगीतादिविद्यासु विचक्षणं निपुणम्। जङ्घयोरन्तरमेव मध्यद्वारं तेन सञ्चरति निःसरति।

विच। अहो दे विअक्खणत्तणं! जदो मुणिणो वि एव्वं सुमरंति, पादाहिं बह्मणस्स पवित्तणं त्ति (१)।

सुल। (विभाव्य) अहो से किं पि कवडणाडअकइत्तणं बह्मणस्स! (२)।

विच। तदो तदो? (३)।

सुल। तदो तं सुणिअ मेहलाए अंसुजलगलज्जालाइं (ढ) णअणाइं उणरुत्तमुप्फुसन्तीए मह पुरदो जेव्व महाराअसमीववट्टिणीए देवीए तह ज्जेव विसत्तं देवेण वि देवी मन्नुमवहरंतेण चारायण चरिदं अ णिव्वाहंतेण भणिदा जधा, सुंदरि! मा विसण्णा होहि, जादो गंधव्ववेअविअक्खणो साहीणो ज्जेव बह्मणो तत् किं त्ति अंसुकणकरंबिअबिंबाहरा वट्टसि त्ति संठाविदा देवी, देवीए अ अहं अज्ज

(१) अहो ते विचक्षणत्वम्! यतो मुनयोऽप्येवं स्मरन्ति, पादाभ्यां ब्राह्मणस्य पवित्रत्वमिति।

(२) अहोऽस्य किमपि कपटनाटककवित्वं ब्राह्मणस्य।

(३) ततस्ततः।

(४) ततस्तच्छ्रुत्वा मेखलाया अश्रुजलगलज्जले नयने पुनरुक्तमुन्मोञ्छन्त्या मम पुरत एव महाराजसमीपवर्त्तिन्या देव्या तथैव विसृष्टं देवेनापि देवी मन्युमपहरता चारायणचरितं च निर्वाहयता भणिता, यथा, सुन्दरि! मा विषण्णा भव, यतो गान्धर्ववेदविचक्षणः स्वाधीन

(ढ) गलन्ति अश्रुजलानि याभ्यां तादृशे नयने पुनः पुनः प्रोञ्छन्त्या मम इति पाठः समीचीनः। अश्रुकरम्बितबिम्बाधरा अश्रुभिः करम्बितः व्याप्तः बिम्बाधरः यस्याः तथाभूता।

सा पुस्सिम त्ति भणिअ पूआसक्कारं सज्जीकादुं पेसि-
दह्मि (४)।

विच। ता एहि जधाणिद्दिठ्ठमणुचिठ्ठह्म (१)।

(इति निष्क्रान्ते)।

(इति प्रवेशकः) (ण)।

(ततः प्रविशति निविड़ोत्कण्ठो राजा
स्नानशुचिर्विदूषकश्च)।

राजा। (अनुध्याननाटितकेन)।

क्रमसरलितकण्ठप्रक्रमोल्लासितोर-
स्तरलितवलिलेखासत्रसर्वस्वमस्याः।
स्थितमतिचिरमुच्चैरग्रपादाङ्गुलीभिः
करकलितसखीकं मां दिदृक्षोः स्मरामि॥ २॥

---

एव ब्राह्मणस्तत् किमित्यसुकरावलम्बितबिम्बाधरा वर्त्तसे इति संस्थापिता
देवी, देव्या चाहम् अद्य सा पूर्णिमेति भणित्वा पूजासत्कारं सज्जी-
कर्तुं प्रेषिताऽस्मि।

(१) तदेहि यथानिर्दिष्टमनुतिष्ठावः।

---

(ण) प्रवेशकः चेटीद्वयस्य नीचपात्रत्वेन तत्प्रयोज्यत्वादेतदंशस्य
प्रवेशकत्वं यथोक्तं प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजित इति।

(२) क्रमेति। मां दिदृक्षोः द्रष्टुमिच्छोः अस्याः कामिन्याः क्रमेण
सरलितः सरलीकृतः यः कण्ठः तस्य प्रक्रमेण सरलीकरणेन इत्यर्थः
तरलितं वलिलेखाख्यं त्रिवलीरेखारूपस्थं सर्वस्वं समग्रधनं यस्मिन्
तथोक्तं करकलिता करधृता सखी यस्मिन् तादृशम् अवलम्बितसखीकर-

विदूषकः। मा समाधानभंगं (त) कुण, देवीपुरदो मेहला जीवइदव्वा (स्वगतम्) अइ दुट्ठदासि! णिवडिस्सदि देऽण्डः कुरुद्दो चारायणवम्हणो (१)।

राजा। तद्वचनमनाकर्ण्य तदेव क्रमेत्यादि पुनः पठति।

विदू। मा पुणो तं सुमर संदावदाइणी डाइणी क्खु सा (२)।

राजा। किमात्थ सन्तापकारिणीति? तत्तव पञ्चमकाकलीकलगीतयः (थ) कर्णं कलुषयन्ति, सुधास्यन्दिनी चन्द्रमूर्त्तिश्चक्षुषी तापयति,चन्दनरसनिष्यन्दस्तनुं दहति?

विदूषकः। भो वक्करं मए कहिदं, तुमं जेव्व सव्वदो सारसुव्विणसि (द) हंसो जेव्व जलहिं दुद्धमुद्धरेदि किं उण

---

(१) मा समाधान भङ्गं कुरु, देव्याः पुरतः मेखला जीवयितव्या। अयि दुष्टदासि! निपतिष्यति तेऽण्डः कुरुद्धारायणो ब्राह्मणः।

(२) मा पुनस्तां स्मर, सन्तापदायिनी डाकिनी खलु सा।

---

मित्यर्थः अग्रपादाङ्गुलिभिः उच्चैः उन्नमितत्वेन इत्यर्थः अतिचिरं बहुक्षणं स्थितं स्मरामि। मालिनीवृत्तं, न न म य य युतेयं मालिनी भोगिलोकैरिति लक्षणात्।

(त) समाधानभङ्गं मेखलाया जीवनार्थं कृतस्य समाधानस्य योगविशेषस्य भङ्गम्। अण्डः अण्डकोष इत्यर्थः।

(थ) पञ्चमकाकलीकलगीतयः पञ्चमः कोकिलनादः काकली सूक्ष्मस्वरविशेषः कलगीतयः मधुरास्फुटगीतिकाश्च कलुषयन्ति मलिनयन्ति क्लेशयन्तीत्यर्थः।

(द) उन्निनोषि गच्छसि।

भणामि अलसेण विअ विज्जा झत्ति दे विसुमरिद
देवी (१)।

राजा। आशैशवात्प्ररूढ़प्रेमा देवी कथं विस्मर्य्यते
किन्तु—

देव्या निधायोपरि वामपादं यत्सुन्दरीणां प्रसभेन भुक्तम्।
कृतं मनो रिक्थमथ द्विधा तत्तुल्यं विभज्य स्मरशासनेन॥४

विदूषकः। ता हिंदोलदोलिदं (ध) विअ दे चित्त
गमागमाहिंतो ण विरमदि (२)।

राजा। एवमेतत्। यतः—

न मालतीदाम विमर्दयोग्यं
न प्रेम नव्यं सहतेऽन्तरायम्।

---

(१) भो वक्रं मया कथितं, त्वमेव सर्वतः सारसुग्राहीऽसि। हंस ए
जलाद् दुग्धमुद्धरति। किं पुनर्भणामि। अलसेनेव विद्या ते झटि
विस्मृता देवी।

(२) तद् हिन्दोलदोलितमिव ते चित्तं गमागमाभ्यां न विरमति

---

(४) देव्येति। देव्या सुन्दरीणाम् उपरि शिरसीत्यर्थः वामपाद
निधाय सापत्न्यराहित्यादिति भावः यत् मनोरिक्थं मनोरूपं मम धन
प्रसभेन बलात् भुक्तम्, अथ अद्य स्मरस्य कामस्य शासनेन तत् तुल्य
विभज्य द्विधा कृतम्। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिवृत्तं स्यादिन्द्रवज्र
यदि तौ जगौ ग इति उपेन्द्रवज्रा प्रथमे लघौ सेति। अनन्तरोदीरित
लक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति लक्षणात्।

(ध) हिन्दोले दोलायन्त्रे दोलितं ते चित्तं मनः।

(५) नेति। मालतीदाम न विमर्दयोग्यं न दलनीयं, नव्यं प्रेम

म्लानापि मोच्या न हि केसरस्रक्
देवी न खण्ड्यप्रणया कथञ्चित् ॥ ५ ॥

विदूषकः । भोः किं एदेण दक्खिणवअणोवसासेन ? (न) पुराणपत्तमपेल्लिअ णो णवपल्लवो समुल्लसदि । ण अ तरुणगंठिवस्सअकंदलीकवलणलुद्धो गंधहरिणो दवणअकेरिआए अहिरमदि (१) ।

राजा । सखे! निरर्गलवागसि । यदनाशङ्कनीयं तदाशङ्कसे ।

विदूषकः । किं मम परकेरिकाए चिन्ताए ता भणी-

(१) भोः ! किमेतेन दाक्षिण्यवचनोपन्यासेन? पुराणपत्रं अदूरीकृत्य नो नवपल्लवः समुल्लसति । न च तरुणग्रन्थिपर्णकाङ्कुरकवलनलुब्धो गन्धहरिणो दमनककेदारिकायामभिरमति ।

अन्तरायं विघ्नं न सहते न अनुरुध्यते इत्यर्थः । म्लाना पर्युषिता अपि केसरस्रक् बकुलमाला न हि मोच्या त्याज्या, तथा देवी कथञ्चित् कथमपि न खण्ड्यः खण्डनीयः प्रणयो यस्याः तादृशी । नवीनानुरक्तेन मया देवीप्रेम न कदापि विस्मरणीयमिति भावः ।

( न ) दाक्षिण्यवचनोपन्यासेन दक्षिणः तदाख्यनायकः । तदुक्तं दर्पणे । तत्र अनेकासु समरागो दक्षिणः कथित इति । तस्य इदं दाक्षिण्यं तत् वचनं दाक्षिण्यवचनं तस्योपन्यासेन कीर्त्तनेन । पुराणपत्रम् अदूरीकृत्य अनिराकृत्य इत्यर्थः । तरुणग्रन्थिपर्णकाङ्कुरकवलनलुब्धः तरुणः अभिनवः यः ग्रन्थिपर्णकस्य तरुविशेषस्य अङ्कुरः तस्य वलने ग्रहणे लुब्धः गन्धहरिणः कस्तूरीमृगः गन्धप्रियमृगो वा ।

असि, मा समाधिभंगं मे कुण, देवीपुरदो मेहला जीवइ-दव्वा (१)।

(ततः प्रविशति देवी प्रयता च मेखला विभवतश्च परिवारः।)

देवी। हला सुलक्खणे! अपि संणिहिदो अंतेउरदुवा-रप्पग्गीवे (प) अज्जउत्तो चाराअणबह्मणो अ (२)।

सुलक्षणा। किं अस्सधा देवी विस्सवीअदि? (३)।

विदूषकः। एदं प्पग्गीवं ता उअविसदु प्पिअवअस्सो (४)।

(तथा कुरुतः)।

देवी। जअदु जअदु अज्जउत्तो अज्जचाराअण! देसु मे धत्तेइआं (फ) भिक्खां जीआवेसु मेहलअं (५)।

विदूषकः। एस सज्जो ह्मि (६)।

---

(१) किं मम परकीयया चिन्तया तद्भणसि, मा समाधिभङ्गं मे कुरु देवीपुरतो मेखला जीवयितव्या।

(२) हला सुलक्षणे! अपि सन्निहितोऽन्तःपुरद्वारप्रग्रीवे आर्य्यपुत्रश्चारायणब्राह्मणश्च।

(३) किमन्यथा देवी विश्वास्यते?

(४) एतत् प्रग्रीवं तदुपविशतु प्रियवयस्यः।

(५) जयतु जयतु आर्य्यपुत्रः। आर्य्य चारायण! देहि मे धात्रेयिकां भिक्षां, जीवय मेखलाम्।

(६) एष सज्जोऽस्मि।

---

(प) अन्तःपुरद्वारप्रग्रीवे अन्तःपुरद्वारस्य उपान्त्यप्रदेशे।

(फ) धात्रेयिकां धात्री उपमाता प्रसूतमात्रेण या धरतीत्यर्थः तस्या अपत्यं स्त्री धात्रेयिका ताम् उपमातृदुहितरमित्यर्थः।

मेखला। ( बद्धाञ्जलिः ) अज्ज चाराअण ! अअं जणो तुमं महाबम्हणं सरणं पडिवज्जदि ( १ )। ( इति पादौ शिरस्यारोपयति )।

नेपथ्ये। कहिं कहिं सा दुट्ठदासी एदे अह्मे कालपुरिसा सिंखलाहिं गले बाढ़ं बंधिअ मेहलं णेदुमाअदा ( २ )।

विदूषकः। ( बहुविधं दण्डकाष्ठमुद्यम्य ) जइ अहं पिङ्गलिआवल्लहो गन्धव्ववेअविअक्खणो रक्खको चिट्ठामि। ता को कालो के कालपुरिसा का वा कालसिंखला (३)। ( इति बहुविधं वल्गति ) ( ब )।

मेखला। (पादयोरन्तरे प्रविशति) भो ! परित्ताअस्सु मं ( ४ )।

विदूषकः। ( उच्चैर्गायन्नपवार्य्य ) भो पेक्ख पेक्ख महाराअ ! विलासिणीमम्महरहाहिरूढं अत्तणो प्पिअवअस्सं। ( किञ्चिदुच्चैः ) भो पेक्खध बह्मणत्तणं जेण खलखलायिदसिंखला कालपुरिसा पणट्ठा ( ५ )।

---

( १ ) आर्य्य ! चारायण ! अयं जनस्त्वां महाब्राह्मणं शरणं प्रतिपद्यते।

( २ ) कुत्र कुत्र सा दुष्टदासी, एते वयं कालपुरुषाः शृङ्खलाभिर्गले गाढ़ं बद्धा मेखलां नेतुमागताः।

( ३ ) यद्यहं पिङ्गलिकावल्लभो गान्धर्ववेदविचक्षणो रक्षकस्तिष्ठामि। तत् कः कालः के कालपुरुषाः का वा कालशृङ्खलाः।

(४) भोः परित्रायस्व माम्।

(५) भोः प्रेक्ष प्रेक्ष महाराज ! विलासिनीमन्मथरथाधिरूढ़मात्मनः

---

(ब) वल्गति सोल्लम्फं परिक्रामति।

मेखला। अम्महे! जीविदम्हि (१)

विदूषकः। (सास्फोटं (भ) विहस्य) आः दासीए धीए! अलीअविवाहविड़म्बिदो दुक्कुद्धो (म) णिवड़िदो दे चाराअणबम्हणो संपदमेत्तिकं आसंसे दीहसमग्गकंकणा भोदु मे बम्हणी (२)।

मेखला। (विलक्षा रोदिति)।

देवी। अज्जउत्त! जुत्तं णेमं सरिसं णेमं जं दाणीं मे पिअसहि मेहला एवं विड़ंबीअदि? (३)।

विदूषकः। भोदीए जुत्तं णेमं सरिसं णेमं जं महाराअपिअवअस्सो तधा विड़ंबीअदि (य) (४)।

---

प्रियवयस्यम्। भोः प्रेक्षत मे ब्राह्मणत्वं येन खलखलायितस्कन्धाः कालपुरुषाः प्रनष्टाः।

(१) अम्महे! जीवितास्मि।

(२) आः दास्याः दुहितः! अलीकविवाहविड़म्बितो दुःक्रुद्धो निपतितस्ते चारायणब्राह्मणस्तद्साम्प्रतमेतावदाशंसे, दीर्घसमग्रकङ्कणा भवतु भवतु मे ब्राह्मणीति।

(३) आर्यपुत्र! युक्तमेतत् सदृशमेतद् यदिदानीं मे प्रियसखी मेखला एवं विड़म्ब्यते?

(४) भवत्या युक्तमेतत् सदृशमेतद्यन्महाराजप्रियवयस्यस्तथा विड़म्ब्यते?

---

(भ) आस्फोटं बाहुस्फोटनं कृत्वा इत्यर्थः।

(म) दुःक्रुद्धः अतिक्रुद्धः। आशंसे प्रार्थये, दीर्घसमग्रकङ्कणा दीर्घं प्रशस्तं समग्रं सम्पूर्णं कङ्कणम् अलङ्कारविशेषः यस्याः तादृशी। विलक्षा लज्जिता अप्रतिभा वा।

(य) विड़म्ब्यते प्रतार्यते।

देवी । अज्जस्स संबंधिओ (र) त्ति मए सह एदाए वक्करं किदं (१) ।

विदूषकः । संबंधिणी त्ति मए वि वक्करं किदं (२) ।

मेखला । देवो सक्कीअदि उत्तरं दादुं । पराजेदु एसो, महाराओ एदस्स गुरुः । केअइकुसुमवासिदस्स खदिरसारस्स वि अस्सो गंधुग्गारो (३) ।

देवी । (कोपनाटितकेन सपरिवारा निष्क्रान्ता) ।

विदूषकः । (पार्श्वमवलोक्य) संपदं णिम्मक्खिअं (व) मे पिअवअस्सस्स (४) ।

राजा । अतिविलक्षणा देवी यतो रुदती गता ।

विदूषकः । रुदतु रुदतु किं सो मोतिआओ गलि-

---

(१) आर्य्यस्य सम्बन्धीति त्वया सहैतया वक्रं कृतम् ।

(२) सम्बन्धिनीति मयापि वक्रं कृतम् ।

(३) देवी शक्यते उत्तरं दातुम् । पराजयत्वेषः, महाराज एतस्य गुरुः, केतकीकुसुमवासितस्य खदिरसारस्याप्यन्यो गन्धोद्गारः ।

(४) साम्प्रतं निर्म्मक्षिकं मे प्रियवयस्यस्य ।

---

(र) सम्बन्धी सखा । वक्रं कौटिल्यं परिहासो वा ।

(ल) पराजयतु विजयी भवतु । अन्या गन्धोद्गारः अन्यप्रकारो गन्धनिर्गमः महतः संसर्गेण एतस्य महत्त्वात् नायम् उत्तरेण पराजेय इति भावः ।

(व) निर्म्मक्षिकं मक्षिका अभावः निर्म्मक्षिकं प्रियवयस्यसन्निधौ मक्षिकापि नास्तीत्यर्थः ।

स्संति ता इदो उज्जाणाहिमुहं एदु पिअवअस्सो (१।)
(इति परिक्रामतः)।

विदूषकः। भो मह करे ठाविदपाणी (अ) मसिणणिवेसिदपादमुद्दो संचरदो बहलालिपडलणिम्मिदं व कोइलकुलकलिदजम्मेव तेलमंजिदकज्जलपुंजसंजणिदं व इंदणीलचुण्णसंभूदं व सिदिकण्ठकण्ठसंघड़िदं व णाराअणतणुविणिग्गदं व मिअंककलंकणिक्कालिदं व कुवलअदलपरिकप्पिदं व करिदाणप्पवित्तं व तिमिरचक्कवालं अविसादसमविसमं अणिणीदसामधवलं अपरिच्छिण्णलहुदीहं अणधिगददूरसंणिहिदं भुअणगब्भंग्गणं करेदि (२)।

(१) रुदतु रुदतु किमस्या मौक्तिकानि गलिष्यन्ति। तदित उद्यानाभिमुखमेतु प्रियवयस्यः।

(२) भोः! मम करे स्थापितपाणिर्मसृणनिवेशितपादमुद्रः सञ्चरतो बहुलालिपटलनिर्मितमिव कोकिलकुलकलितजन्मेव तैलमार्जितकज्जलपुञ्जसञ्जनितमिव इन्द्रनीलचूर्णसंभृतमिव शितिकण्ठकण्ठसंघटितमिव नारायणतनुविनिर्गतमिव मृगाङ्ककलङ्कनिष्कासितमिव कुवलयदलपरिकल्पितमिव करिदानप्रवृत्तमिव तिमिरचक्रवालमविज्ञातसमविषममनिर्णीतश्यामधवलमपरिच्छिन्नलघुदीर्घमनधिगतदूरसन्निहितं भुवनगर्भाङ्गणं करोति।

(अ) मम करे संस्थापितः पाणिर्येन तस्य मसृणं मृदु यथा तथा निवेशिता विन्यस्ता पादमुद्रा चरणक्षेपो यस्मिन् तत् यथा तथा सञ्चरतः विचरतः तव इति शेषः। बहुलालिपटलनिर्मितं बहुलैरलिपटलैः भ्रमरवृन्दैः निर्मितमिव जनितमिव। कोकिलकुलैः कलितं गृहीतं जन्म यस्य तादृशमिव। शितिकण्ठस्य हरस्य कण्ठेन सङ्घटित-

राजा। एवमेतत्।

तनुलग्ना इव ककुभः क्ष्मावलयं चरणचारपात्रमिव।
वियदपि चालिकादघ्नं मुष्टिग्राह्यं तमः कुरुते॥ ६॥

(किञ्चित्तर्कयामि)—

उत्तंसः केकिपिच्छैर्मरकतवलयैः श्यामलैर्दोःप्रकाण्डे
हारः सान्द्रेन्द्रनीलैर्मृगमदरचितो वक्षपत्रप्रपञ्चः।
नीलाब्जैः शेखरश्रीरसितवसनता चेत्यभीकाभिसारे
संप्रत्येणेक्षणानां तिमिरभरसखी वर्तते वेषलीला॥ ७॥

---

मिव रचितमिव। नारायणस्य तन्वाः शरीरात् विनिर्गतमिव श्यामत्वादिति भावः। कुवलयदलैः नीलोत्पलपलाशैः परिकल्पितमिव। रचितमिव करिदानप्रवृत्तमिव हस्तिमदजलसञ्जातमिव। तिमिरचक्रवालं तमःपुञ्जं भुवनस्य जगतः गर्भ एव अङ्गणम् अजिरं तत् अविज्ञातं समं विषमञ्च यस्य तत्, अनिर्णीतौ श्यामधवलौ प्रदेशाविति शेषः यस्य तत्, अपरिच्छिन्ने लघुदीर्घे यस्य तथोक्तं तथा अनधिगतम् अज्ञातं दूरं सन्निहितञ्च यस्य तादृशं करोति।

(७) उत्तंस इति। साम्प्रतम् एणेक्षणानां मृगनयनानाम् अभीकाभिसारे कान्ताभिगमे सङ्केतस्थानगमने इत्यर्थः वेषलीला वेषस्य परिच्छदस्य लीला विलासः रचना इत्यर्थः तिमिराणां भरः समूहः तस्य सखी सङ्गिनी अनुरूपा इत्यर्थः वर्त्तते, तथाहि केकिनां मयूराणां पिच्छैः बर्हैः उत्तंसः कर्णभूषणं, श्यामलैः मरकतवलयैः दोःप्रकाण्डे, हस्ताभरणे, सान्द्रैः घनैः इन्द्रनीलैः नीलकान्तैः हारः, वक्षःसु पत्रप्रपञ्चः पत्ररचना मृगमदरचितः कस्तूरीविरचितः, नीलाब्जैः नीलकमलैः शेखरश्रीः शिरोभूषणं तथा असितवसनता नीलवसनञ्च इति। स्रग्धरावृत्तम्।

( नेपथ्ये )

आवट्टिअदुद्धमुद्धकरतलिअजलणिहिसलिलसंचओ
तिहुवणभवणवलअविक्कुरणसुहारसधवलणकुच्चओ ।
चंदो मअणवल्लिपल्लवणमहोसहिसरिसजोह्णओ
जअइ अणंगकेलिभवणंगणचन्दणपंकवत्तओ ॥ ८ ॥

अपिच । जणाणंदो चंदो हसइ मलिणी होइ णलिणी
विसट्टन्ते तारा रअणिसिरिहारा दिसि दिसि ।

---

आवर्त्तितदुग्धमुग्धकरतरलितजलनिधिसलिलसञ्चयः
त्रिभुवनभवनवलयविच्छुरणसुधारसधवलनकूर्चकः ।
चन्द्रो मदनवल्लिपल्लवनमहौषधिसदृशज्योत्स्नः
जयत्यनङ्गकेलिभवनाङ्गणचन्दनपङ्कवर्त्तकः ॥ ८ ॥
जनानन्दश्चन्द्रो हसति, मलिनी भवति नलिनी
विकसन्ति तारा रजनीश्रीहारा दिशि दिशि ।

---

(८) आवर्त्तितेति । आवर्त्तितानि अग्निसन्तापेन घनीभूतानि यानि दुग्धानि तद्वत् मुग्धाः चारवः ये कराः किरणाः तैः तरलितः उद्वेलीकृतः जलनिधेः समुद्रस्य सलिलसञ्चयः जलराशिः येन तथोक्तः, त्रिभुवनमेव भवनवलयं गृहमण्डली तस्य विच्छुरणात् विलेपनाय यः सुधारसः चूर्णसलिलं तेन यत् धवलनं श्वेतीकरणं तस्य कूर्चकः कुर्चीति प्रसिद्धा लेपनवर्त्तिका, मदन एव वल्लिर्लता तस्याः पल्लवने विस्तारे वर्द्धने इत्यर्थः या महौषधिः तत्सदृशी ज्योत्स्ना चन्द्रिका यस्य तथाभूतः तथा अनङ्गस्य मदनस्य यत् केलिभवनं क्रीड़ागृहं तस्य यत् अङ्गणम् अजिरं तस्य चन्दनपङ्कवर्त्तकः चन्दनरसविलेपनः चन्द्रः जयति शोभते ।

(९) जनानन्द इति । जनानाम् आनन्दः आनन्दवर्द्धनः चन्द्रः हसति विराजते, नलिनी पद्मिनी मलिनी भवति, रजनीश्रियः रात्रि-

रहंगा दड्ढंगा विरहसिहिणा दड्ढविहिणा
इमे दुक्खक्कंता ससिकरकिलंता विहड़िदा ॥ ९ ॥

( पुनर्नेपथ्ये )

ये पूर्वं यवसूचिसूत्रसुहृदो ये केतकाग्रच्छद-
च्छायासाम्यभृतो मृणाललतिकालावण्यभाजोऽत्र ये ।
ये धाराम्बुविड़म्बिन: क्षणमथो ये तारहारश्रिय-
स्तेऽमी स्फाटिकदण्डडम्बरचितो जाताः सुधांशोः कराः ॥१०॥

अपिच, सद्यस्नस्नपङ्कपिच्छिलमिव व्योमाङ्गणं कल्पयन्
पश्यैरावतकान्तदन्तमुसलच्छेदोपमेयाकृतिः ।

---

रथाङ्गा दग्धाङ्गा विरहाग्निशिखिना दग्धविधिना
इमे दुःखक्रान्ताः शशिकरकीलिता विघटिताः ॥ ९ ॥

---

तन्मयाः हारा हारस्वपाः तारा नक्षत्रमालाः दिशि दिशि विकसन्तु । तथा रथाङ्गाः चक्रवाकाः दग्धविधिना हतदैवेन विरहशिखिना विच्छेदानलेन दग्धानि अङ्गानि येषां तथाभूता, किं बहुना विघटिताः प्रियविरहिता इमे कोकाः शशिकरैः कीलिताः निपीड़िताः दुःखक्रान्ता दुःखाभिभूताः ।

(१०) ये इति । अत्र जगति ये पूर्वं प्रथमं यवानां धान्यशस्यविशेषाणां सूचयः अग्राणीव सूत्राणि तन्तवः तेषां सुहृदः सदृशाः, ये केतकानां ये अग्रच्छदा अग्रपत्राणि तेषां या छाया कान्तिः तस्याः साम्यभृतः समानाः ये मृणाललतिकानां यत् लावण्यं श्रीः तद्भाजः, ये क्षणं धाराम्बूनि विड़म्बन्ते अनुकुर्वन्तीति तादृशाः, अथो अनन्तरं ये तारहारस्य महतः हारस्य श्रीरिव श्रीर्येषां तथाभूताः, ते अमी सुधांशोः कराः किरणाः स्फाटिकदण्डानां स्फटिकनिर्मितयष्टीनां डम्बरं शोभां जयन्तीति तथाभूताः जाताः क्रमशः परिवर्द्धन्ते इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ।

उद्गच्छत्ययमच्छमौक्तिकलताप्रालम्बलम्बैः करै-
र्मुग्धानां स्मरलेखवाचनकलाकेलिप्रदीपः शशी ॥८१॥

विदूषकः। एसा कलकण्ठी णाम देवी णगरिणी (ष) ताए वअणादो पुण्णिमाचंदोदयं कप्पूरचंदणामधेयो मागधो अहिणंदेदि मिअंकुज्जोतलच्छिं, ता ममापि वड्ढदि तुंडकंडूः अहं पि वण्णिस्सं ससिबोलआहिं ढलिओ जोण्हाखड्डिआरसो मसीकुणइ णक्खत्तक्खरमालं णहफलए तिमिरकज्जलिए (१)।

---

(१) एषा भोः कलकण्ठी नाम देवी नागरिणी तस्या वचनात् पूर्णिमाचन्द्रोदये कर्पूरचन्द्रनामधेयो मागधोऽभिनन्दयति मृगाङ्कोद्योतलक्ष्मीं, तत् ममापि वर्धते तुण्डकण्डुः अहमपि वर्णयिष्ये शशिमषीपातात् चन्द्रिनी ज्योत्स्नाखडिकारसो मषीकरोति नक्षत्रमालां नभःफलके तिमिरकज्जलिते।

---

(८१) पश्य इति। पश्य अवलोकय अयं शशी चन्द्रः व्योम आकाशमेव अङ्गणं सद्यः सहसा चन्दनपङ्केन चन्दनरसेन पिच्छिलमिव कल्पयन् कुर्वन्, ऐरावतस्य कान्तं यत् दन्तमुषलं मुषलाकृतिदशनं तस्य छेदेन खण्डेन उपमेया आकृतिर्यस्य तादृशः, अच्छा निर्मलाः मौक्तिकलता इव ये प्रालम्बा हाराः ते इव लम्बन्ते इति तथोक्ताः तैः करैः मुग्धानां सुन्दरीणां स्मरलेखस्य कामलेखस्य कान्तप्रेरितस्य इति भावः वाचनकलायां पठनविधौ केलिदीपः क्रीड़ाप्रदीपः सन् उद्गच्छति उदेति। शार्दूलविक्रीड़ितं वृत्तम्।

(ष) नागरिणी नगरवासिनी। मृगाङ्केन मृगचिह्नेन उद्द्योतिता लक्ष्मीर्यत्र तादृशं चन्द्रोदयस्य विशेषणमेतत्। तुण्डकण्डुः तुण्डस्य मुखस्य कण्डुः (चुलकुनीति भाषा)। शशिमषीपातात् शशिन एव

राजा । सखे ! नाद्यापि शैशवोक्तिरतिरिच्यते (ख) ।

विदूषकः । किं विअ मक्कडो (ह) उवट्ठाणं करंतो णुक्कदि, अहवा, तरुणुत्तीहिं वण्णइस्सं (१) ।

अकंकणमकुंडलं दसदिसा वहूमंडणं
अचंदणमकुंकुमं धरणिमंडलीभूसणं ।
असोसणममोहणं मअरलञ्छणस्साउहं
मिअङ्ककिरणावली णहयलम्मि पुञ्जिज्जए ॥ १२ ॥

---

(१) किमिव मर्कट उपस्थानं कुर्वन् निस्सरति, अथवा, तरुणोक्तिभिर्वर्णयिष्ये ।

अकङ्कणमकुण्डलं दशदिशो वधूमण्डनं
अकुङ्कुममचन्दनं धरणीमण्डलीभूषणम् ।
अशोषणममोहनं मकरलाञ्छनस्यायुधं
मृगाङ्ककिरणावली नभस्तलेऽपि पुञ्जायते ॥ १२ ॥

---

मषीभाजनात् स्यन्दते स्रवतीति तथोक्तः ज्योत्स्ना एव खड़िकारसः (खाँड़गुड़ इति भाषा) तिमिरकज्जलिते तमसाच्छन्ने नभःफलके नक्षत्रमालां मषीकरोति मलिनयतीत्यर्थः ।

(ख) शैशवोक्तेः शिशुवचनात् शिशुरिव भाषसे इति भावः ।

(ह) मर्कटः उपस्थानं कुर्वन् किमिव निःसारयति निर्वक्तुं शक्नोतीति यावत् न किमपीत्यर्थः । तरुणोक्तिभिः युववचनैः ।

(१२) अकङ्कणमिति । अकङ्कणम् अकुण्डलं कङ्कणकुण्डलरहितमित्यर्थः दशदिश एव वध्वः तासां मण्डनम् अलङ्करणम् । अचन्दनम् अकुङ्कुमं चन्दनकुङ्कुमरहितं धरणीमण्डल्या भूषणम् ।

राजा। (समन्तादवलोक्य मदनाकूतमभिनीय) भगवन् यामिनीनाथ! कस्तवायं विरुद्धो विधिः (च)?

स्फूर्तिर्दुग्धसमुद्रतो भगवतः श्री-कौस्तुभौ सोदरौ
सौहार्दं कुमुदाकरेषु किरणाः पीयूषधाराकिरः।
स्पर्धा ते वदनाम्बुजैर्मृगदृशां तत् स्थाणुचूडामणे!
हंहो चन्द्र! कथं नु सिञ्चसि मयि ज्वालामुचो रोचिषः॥१३॥

अपिच, यन्त्रद्रावितकेतकोदरदलस्रोतःश्रियं बिभ्रती
येयं मौक्तिकदामगुम्फनविधेर्योग्यच्छविः प्रागभूत्।
उत्सेच्या कलसीभिरञ्जलिपुटैर्ग्राह्या मृणालाङ्कुरैः
पातव्या च शशिन्यमुग्धविभवे सा चन्द्रिका वर्त्तते॥१४॥

---

अशोषणम् असमोहनं शोषणमोहनातिरिक्तं मकरलाञ्छनस्य कामस्य आयुधम् अस्त्रं मृगाङ्ककिरणावली चन्द्रकिरणजाल नभस्तलेऽपि पुञ्जायते राशीभवति।

(च) विरुद्धः विपरीतः विधिः आचरणम्।

(१३) स्फूर्तिरिति। हंहो स्थाणुचूड़ामणे हरशिरोमणे चन्द्र! भगवतः सर्वशक्तिमतः ते तव दुग्धसमुद्रतः क्षीरसागरात् स्फूर्तिः उद्भवः महाकुलप्रसूतोऽसीति भावः, श्रीर्लक्ष्मीः कौस्तुभः मणिविशेषश्च (यो नारायणेन वक्षसि विधृतः) सोदरौ सोदरा सोदरश्च। कुमुदाकरेषु कुमुदसरःसु सौहार्दं सख्यं किरणाः पीयूषधाराकिरः अमृतधारावर्षिणः तथा मृगदृशां सुन्दरीणां वदनान्येव अम्बुजानि तैः स्पर्द्धा प्रतिपक्षता तत् तदा मयि ज्वालामुचः अग्निशिखावर्षिणीः रोचिषः शिखाः कथं सिञ्चसि नु? नु प्रश्ने। एतादृशस्य महात्मनस्ते मदुपीड़नं नोचितमिति भावः। शार्दूलविक्रीड़ितं वृत्तम्।

(१४) यन्त्रेति। या इयं चन्द्रिका प्राक् यन्त्रेण द्रावितानि द्रवी-

( विभाव्य ) वैमत्यमेव ( क ) वा शशलक्ष्मणो मादृग्जन-प्राणसन्देहहेतुः वैषद्यमेव वा विषमं विषस्य ( चतुर्दिशमव-लोक्य साभ्यर्थनम् )

अयि पिबत चकोराः ! कृत्स्नमुन्नाम्य कण्ठं
क्रमकवलनचञ्चच्चञ्चवश्चन्द्रिकाम्भः ।
विरहविधुरितानां जीवितत्राणहेतो-
र्भवति हरिणलक्ष्मा येन तेजोदरिद्रः ॥ १५ ॥

( पुरोऽवलोक्य ) सैवेयं मृगाङ्कावली ।

---

कृतानि यानि केतकानां केतकीकुसुमानाम् उदरदलानि अभ्यन्तरपर्णानि तेषां स्रोतसः प्रवाहस्य श्रियं कान्तिं बिभ्रती धारयन्ती सती मौक्तिक-दाम्नां मुक्ताहाराणां गुम्फनविधेः ग्रन्थनविधानस्य योग्या सदृशी रुचिः कान्तिर्यस्य तादृशी अभूत् सा इदानीं शशिनि चन्द्रे असुग्धविभवे प्रौढ़तां गते इत्यर्थः कलशीभिः उत्सेच्या उत्सेचनीया, अञ्जलिपुटैः पाह्या ग्रहीतुं शक्या तथा मृणालाङ्कुरैः पातव्या च वर्त्तते, क्रमशः परिवर्द्धनादिति भावः । शार्दूलविक्रीड़ितं वृत्तम् ।

( क ) वैमत्यं विमतिः विरुद्धमतित्वमित्यर्थः । वैषद्यं स्वच्छता विषं यथा यथा स्वच्छं तथा तथा विषमं तद्वत् चन्द्रो यथा यथा विषदः तथा तथा नितरां दाहकः। निर्म्मलचन्द्रस्य अत्यन्तोद्दीपकत्वादिति भावः ।

(१५) अयीति । अयि भोः चकोराः ! क्रमेण यत् कवलनं ग्रासः पानमित्यर्थः तेन चञ्चन्त्य स्फुरन्त्यः चञ्चवः येषां तादृशा यूयं कण्ठम् उन्नाम्य उत्क्षिप्य कृत्स्नं समग्रं चन्द्रिकाम्भः चन्द्रकिरणरूपं जलं विरहविधुरितानां विच्छेदार्त्तानां जीवितस्य त्राणहेतोः रक्षणार्थं पिबत, येन हरिणलक्ष्मा मृगाङ्कः तेजसा दरिद्रः निस्तेजा भवति । मालिनीवृत्तम् ।

विदूषकः। भो मिअंकावलि ज्जेव एसा, णहु एक्कचन्दस्स एत्तिओ कंतिवित्थारो (१)।

राजा। ततः कदलीलतान्तरिताविव शृणुवस्तावदस्या विस्रम्भजल्पितानि (ख)। आतृप्ति पिबेतां श्रवसी रसायनम् (तथा कुरुतः)।

(ततः प्रविशति मृगाङ्कावली विचक्षणा च।)

मृगाङ्कावली। (अनुध्यानानाटितकेन (ग) तदेव पठति।)

राजा। (सखेदम्) अहो मदनमन्त्राक्षराणि सुभाषितवचनान्यस्याः।

विदूषकः। अहं उण जाणे निसिदाणि (घ) हदमअणस्स हत्थभल्लाणि (२)।

राजा। कण्ठे मौक्तिकमालिकाः स्तनतटे कार्पूरमच्छं रजः
सान्द्रं चन्दनमङ्गके वलयिताः पाणौ मृणालीलताः।

---

(१) भोः मृगाङ्कावल्येवैषा, न खलु एकचन्द्रस्य एतावान् कान्तिविस्तारः।

(२) अहं पुनर्जाने निशितानि हतमदनस्य हस्तभल्लानि।

---

(ख) विस्रम्भजल्पितानि विश्वासवचनानि प्रणयभाषितानि वा। आतृप्ति तृप्तिपर्यन्तं श्रवसी कर्णौ रसायनं रसनिलयं वचनमिति शेषः पिबेतां सातिशयं शृणुतामिति यावत्।

(ग) अनुध्यानानाटितकेन अनुचिन्तनाभिनयेन।

(घ) निशितानि तीक्ष्णानि हस्तभल्लानि करास्थितभल्लाख्यास्त्राणि।

(१६) कण्ठे इति। इयं तन्वी मृगाङ्की कण्ठे गले मौक्ति-

तन्वी नक्तमियं चकास्ति तनुनी चीनांशुके बिभ्रती
शीतांशोरधिदेवतेव गलिता व्योमाग्रमारोहतः ॥ १६ ॥

विदूषकः । भो सच्चकं ज्जेव चंदाधिदेवता ज्जेव एसा गलिदा । तदो लंच्छणच्छलेण मिअलंच्छणस्स इमीअ अइरपरिचत्तं मिलाणमलिणं व मंडलमज्झं निज्झाअन्ती ( ङ ) दीसदि ( १ ) ।

राजा । सखे ! मांसलतां दधत्यपि चन्द्रिकोद्योतते । व्यतिरिच्यत इवास्याः स्मरजन्मा पाण्डिमा । विभाव्यत एव ( च ) वा शङ्खशुक्तियुक्ताऽपि मुक्तावली । तथाहि—

दरदलितहरिद्राग्रन्थिगौरे शरीरे
स्फुरति विरहजन्मा कोऽप्ययं पाण्डुभावः ।

---

( १ ) भो सत्यकमेव चन्द्राधिदेवतैवैषा गलिता । ततो लाञ्छनच्छलेन मृगलाञ्छनस्यानया अचिरपरित्यक्तं म्लानमलिनमिव मण्डलमध्यं निध्यायन्ती दृश्यते ।

---

कानां मालिकाः स्रजः, स्तनतटे स्वच्छं निर्मलं कार्पूरं कर्पूरस्य इदं रजः परागं कर्पूरचूर्णमित्यर्थः, अङ्गके गात्रे सान्द्रं घनं चन्दनं, पाण्यौ वलयिता वलयाकारेण वेष्टिताः मृणालीलताः, तथा तनुनी सूक्ष्मे चीनांशुके बिभ्रती दधती एती नक्तं रात्रौ व्योमाग्रं गगनाग्रम् आरोहतः शीतांशोः गलिता आरोहणवेगात् प्रच्युता अधिदेवता अधिष्ठात्री देवीव चकास्ति विराजते । उत्प्रेक्षालङ्कारः । शार्दूलविक्रीड़ितं वृत्तम् ।

( ङ ) निध्यायन्ती चिन्तयन्ती ।

( च ) मांसलतां परिपुष्टताम् । स्मरजन्मा कामजनितः पाण्डिमा पाण्डुत्वम् । विभाव्यते अनुमीयते एव ।

वलति सति यस्मिन् सार्द्धमावर्त्य हेम्ना
रजतमिव मृगाक्ष्याः कल्पितान्यङ्गकानि ॥ १७ ॥

विदूषकः। पारअरसचुंबिअं व सुवसं से लावसं। कमक्कंत (क) गोरत्तणेण पडिवरिदा पंडुभावेण (१)।

मृगाङ्कावली। हंहो हिअअणअणेहिं दिट्ठो तुमं उत्तमसि त्ति अहो अच्चरिअं। अहवा मूले वउलयट्ठीए सुसागंडुस्सेओ कुसुमेसु मइरागंधुग्गारो त्ति (२)।

विदूषकः। किं कारणम्?

राजा। इदं हि कारणान्तरसरागं हृदयमस्याः स्वेनैव हृदयेन कलहायते।

मृगाङ्कावली। अइ कप्पूरसलाआसिसिर विज्जाहर-मल्ल! तुमं पि तमसि त्ति कधं मे णिव्वुदि। चन्दमणी सुअवहं णीसंददि त्ति को वा पडीआरो (३)।

(१) पारदरसचुम्बितमिव सुवर्णमस्या लावण्यम् क्रमाक्रान्ता गौरत्वेन परिवारिता पाण्डुभावेन।

(२) हंहो हृदय-नयनाभ्यां दृष्टस्त्वमुत्तम्यसीत्याश्चर्यम्। अथवा मूले बकुलयष्ट्याः सुरागण्डूषसेकः कुसुमेषु मदिरागन्धोद्गार इति।

(३) त्वयि कर्पूरशलाकाशिशिर विद्याधरमल्ल! त्वमपि ताम्य-

(१७) दरेति। दरदलितः ईषत् खण्डितः यः हरिद्राग्रन्थिः तद्वत् गौरे शरीरे विरहजन्मा कोऽपि अनिर्वचनीयःपाण्डुभावः स्फुरति विकाशते, यस्मिन् पाण्डुभावे वलति बलं प्रकाशयति सति हेम्ना काञ्चनेन सार्द्धं रजतम् आवर्त्य द्रवीकृत्य अस्या मृगाक्ष्या अङ्गकानि कल्पितानि नु, नुशब्दो वितर्के। मालिनीवृत्तम्।

(क) क्रमाक्रान्ता क्रमेण आक्रान्ता।

राजा । नमो मह्यं मृगाङ्कावलीचतुरोपालम्भपात्री-कृताय ।

मृगाङ्कावली । सहि ! सामरणकुसुमबाणो भविअ कधं एआरिसदसं जणं करेदि मअणो ? ता णूणं से विसकुसुम-मया बाणा (१) ।

राजा । सलिलरूपा दहति हिमानी । कुसुममय्यपि स्वभावचण्डा मदनपञ्चशरी (ज) ।

विदूषकः । भो वअस्स ! वस्सारिदुसक्करपुत्तलिअ विअ खणे खणे झिज्जंती एसा कं ण दुमेदि, (झ) किं उण मिलाणा वि मरुवककंदली सुअंधा विरहपरिक्खामा वि अइरम-णिज्जा । (किञ्च) कोरंडकुसुममाल व मिलाअमाणा वि सुट्ठु क्खु रत्तत्तणं दंसेदि (२) ।

---

क्षीति कथं मे निर्वृतिः । चन्द्रमणिकुट्टिमतले निष्यन्दत इति को वा प्रतीकारः ।

(१) सखि ! सामान्यकुसुमबाणो भूत्वा कथमेतादृशदशं जनं करोति मदनः ? तन्नूनमस्य विषकुसुममया बाणाः ।

(२) भो वयस्य ! वर्षाकृतशर्करापुत्तलिकेव क्षणे क्षणे क्षीयमा-णैषा कं न दुनोति किं पुनर्म्लानाऽपि मरुवककन्दली सुगन्धा विरह-

---

(ज) सलिलरूपा सलिलमयी हिमानी हिमसंहतिः । मदनप-ञ्चशरी पञ्चानां शराणां समाहारः पञ्चशरी मदनस्य पञ्चशरी मदनपञ्चशरी ।

(झ) दुनोति तापयति, सर्वमेव दुनोतीत्यर्थः एतस्या एता-मवस्थां दृष्ट्वा सर्व एव परितप्यते इति भावः ।

मृगाङ्कावली। सहि! अहवा किं करीअदु दुच्छेज्जा
प्पेमदुद्दोणी। (सखेदम्) सहि! णिरणुक्कोसो क्खु सो,
विरलो वा परदुक्खदुक्खिदो जणो, थोआ णवपंचमझंकारा
मुक्ककुसुमपीड़विड़बिणो, (सप्रश्रयम्) अइ तिहुअणेक्कधा-
णुक्क मम्मह! मिअंकचूड़ामणिं परिक्खित्त तिक्खत्तणेहि
सरेहिं महिलाअणं विग्गहअंतो ण लज्जसि? जाणामि जत
तस्सिं पि जणे इमे अ आरभडीचंडो (ञ) होसि (१)।

---

परिणामाऽपि चिरमणीया। कुरण्टककुसुममालेव म्लायमानाऽपि बुध्
खलु रक्तत्वं दर्शयति।

(१) सखि! अथवा किं क्रियतां दुश्छेद्या प्रेमदुद्रोणी। सखि!
निरनुक्रोशः खलु सः, विरलो वा परदुःखदुःखितो जनः, स्तोका नव-
पञ्चमझङ्कारा मुक्तकुसुमोत्पीड़विड़म्बिनः। अयि त्रिभुवनैकधानुष्क
मन्मथ! मृगाङ्कचूड़ामणिं परिक्षिप्य तीक्ष्णैः शरैर्महिलाजनं विग्रह-
यन् न लज्जसे? जानामि यदि तस्मिन्नपि जने एवमेवारभटीचण्डो
भवसि।

---

(ञ) प्रेमदुद्रोणी प्रेम एव दुष्टा दुरारोहत्वादिति भावः
द्रोणी एककाष्ठमयी नौः (डोङा) यथा तत्र आरोहणे कष्टं तथा
प्रेमाश्रयेऽपि, यथा तत्रारूढस्य अवतरणमपि पतनशङ्कया कष्टं तथा
प्रेमविच्छेदोऽपि कष्ट इत्यतस्तस्या दुश्छेद्यत्वमिति भावः। निरनुक्रोशः
निर्दयः। विरलः अल्पः, न हि सर्वो जनः परदुःखेन दुःखितो भव-
तीत्यर्थः। नवपञ्चमझङ्काराः नवः पञ्चमः स्वरः येषां तेषां कोकिलानां
झङ्काराः निनादाः स्तोकाः अल्पाः, किन्तु मुक्तान् प्रक्षिप्तान् कुसुमोत्-
पीड़ान् पुष्पोत्करान् विड़म्बन्ति अनुकुर्वन्तीति तथोक्ताः पुष्पप्रकर-
क्षेपणस्येव कोकिलनिनादस्य अल्पत्वेऽपि मनोहारित्वात् असह्यत्वमिति

विदूषकः। अणंगस्स पि आरभडि त्ति महाहासो (ट) मे (१)।

राजा। किमिदमुच्चैर्हसितेन त्रायसे माम्।

मृगाङ्कावली। सहि विअक्खणे! जणसञ्चारो (ठ) विअ (२)।

विचक्षणा। ता कदलीगुम्मंतरिदे (ड) जाणीमो किं णु एदं त्ति (३) (तथा कुरुतः)।

विदूषकः। एहि पविसह्म (४) (इति परिक्रामितकेन)।

---

(१) अनङ्गस्याप्यारभटीति महाहासो मे।

(२) सखि विचक्षणे! जनसञ्चार इव।

(३) तत्कदलीगुल्मान्तरिते जानीवः किं नु एतदिति।

(४) एहि प्रविशावः।

---

भावः। सप्रश्रयं सविनयम्। त्रिभुवनैकधानुष्क! त्रिभुवने अद्वितीयधनुर्धर! मृगाङ्कचूड़ामणिं चन्द्रशेखरं परिचित्य विहाय निर्जितुमशक्तो भूत्वा इति भावः विच्छाययन् विध्यन्। तस्मिन्नपि जने विद्याधरमल्ले इत्यर्थः आरभटीचण्डः आरभटी सदुद्योगः तत्र चण्डः सदुत्कटः।

(ट) अनङ्गस्य अशरीरस्य कामस्य, यस्य शरीरं नास्ति तस्य कथमारभटीति हास्यावसर इति भावः।

(ठ) जनसञ्चारः जनानां सञ्चारः, जना अत्र सञ्चरन्तीति सम्भाव्यते इत्यर्थः।

(ड) कदलीगुल्मान्तरिते कदलीलताभिश्छन्ने आवामिति शेषः।

राजा। (शिशिरोपचारसामग्रीमालोक्य (ढ) नाट्येनादाय च)

मृणालमेतद्वलयीकृतं तया
तदीय एवैष वसन्तपल्लवः।
इदं च तस्याः कदलीदलांशुकं
स पत्रसंक्रान्त इव स्मरज्वरः॥ १८॥

तदनया तदुपभुक्तपरित्यक्तया शीतसामग्र्या आत्मानं निर्वापयामि (तथा करोत्युपविशति च। विदूषकोऽपि यथोचितमुपविशति)।

राजा। अथ वा अपर्य्यालोचितमाचरितं, (ण) यतः—

शीतांशुर्विषसोदरः फणभृतां लीलास्पदं चन्दनं
हारः क्षारपयोभुवः प्रियसुहृत् पङ्केरुहं भास्वतः।
इत्येषां किमिवास्तु वस्तु मदनज्वालाविघाताय यद्
बाह्याकारपरिभ्रमेण तु वयं तत्त्वत्यजो वञ्चिताः॥१९॥

---

(ढ) शिशिरोपचारसामग्रीं शीतप्रक्रियोपकरणम्।

(१८) मृणालमिति। तया मृगाङ्कावल्या एतद् मृणालं वलयीकृतं वलयत्वेन विहितम्, एष च वसन्तपल्लवः तदीय एव तदुपगृहीत एव, इदञ्च कदलीदलांशुकं रम्भादलरूपम् अंशुकं वसनं तस्याः, स तथाविधः पत्रसंक्रान्तः दलसञ्चारितः स्मरज्वरः कामसन्ताप इव। वंशस्थविलं वृत्तं, वदन्ति वंशस्थविलं जतौ जराविति लक्षणात्।

(ण) अपर्य्यालोचितम् अविवेचितम् आचरितम् अविविच्य व्यवहृतमित्यर्थः।

(१९) शीतांशुरिति। शीतांशुश्चन्द्रः विषस्य कालकूटस्य सोदरः सहोदरः उभयोरपि समुद्रजातत्वादिति भावः। चन्दनं फणभृतां

विचक्षणा। सहि मिअंकावलि! फलिदं मे दूइत्तणेण (त) महाराओ वि एआरिसं अवत्थन्तरं उव्वहदि (१)।

राजा। (सन्तापमभिनीय)

व्यजनमरुतः श्वासश्रेणीमिमामुपचिन्वते
मलयजरसो धाराबाष्पं प्रपञ्चयितुं प्रभुः।
कुसुमशयनं कामास्त्राणां करोति सहायतां
द्विगुणगरिमा कामोन्माथः कथं नु विरंस्यति ॥ २० ॥

---

(१) सखि मृगाङ्कावलि! फलितं मे दूतीत्वेन महाराजोऽप्येतादृशमवस्थान्तरमुद्वहति।

---

भुजङ्गानां लीलासदं क्रीडास्थानम्। हारः क्षारपयोभुवः लवणजलनिधेर्जात इति शेषः। पङ्केरुहं पद्मं भास्वतः सूर्य्यस्य प्रियसुहृत्, इत्यस्मात् हेतोः एषां चन्द्रादीनां यद् वस्तु मदनज्वालाविघाताय कामसन्तापशान्तये भवतीति शेषः तत् किमिव अस्तु भवतु न किमपीत्यर्थः, सङ्गदोषेणैवैषां तापकरत्वं सिद्धान्तयितुमुचितमिति भावः, तु किन्तु वय बाह्यानाम् आकाराणां शीतत्वादिगुणानां परिभ्रमेण भ्रान्त्या तत्त्वत्यजः तत्त्वं सन्तापकत्वरूपम् आन्तरगुणं त्यजन्तीति तथाभूताः सन्तः वञ्चिताः प्रतारिताः। शार्दूलविक्रीडितं वृत्तम्।

(त) फलितं मे दूतीत्वेन, मम दौत्यं सफलं जातमित्यर्थः।

(२०) व्यजनेति। व्यजनमरुतः तालवृन्तवायवः इमां श्वासश्रेणीं निःश्वासपरम्पराम् उपचिन्वते वर्द्धयन्ति, मलयजरसः चन्दनरसः धाराबाष्पं बाष्पधारामित्यर्थः प्रपञ्चयितुं विस्तारयितुं प्रभुः समर्थः। कुसुमशयनं पुष्पशय्या कामास्त्राणां सहायतां साहाय्यं करोति, एवं प्रतीकारकल्पनायामपि कामस्य उन्माथः उत्तेजनं द्विगुणः द्विरावृत्तः गरिमा गौरवं यस्य तथाभूतः, अतः कथं नु विरंस्यति विरतो भवि-

विदूषकः । अहो मुद्दासणाहो (थ) लेहो विअ (१) ।

राजा । न केवलं लेखः स्मरसम्बन्धि सन्धिविग्रहसम्बन्धश्च, (द) तथाहि पश्य—

तालीदलं यदकठोरतरं यदत्र
मुद्रा स्तनाङ्कघनचन्दनपङ्कमूर्त्तिः ।
यद्बन्धनं विसलतातनुतान्तवं च
कस्याश्चिदेष गलितस्तदनङ्गलेखः ॥ २१ ॥

विदूषकः । तोए ज्जेव एसो सण्णिधिपरिच्चाअकारणं (ध) भणिदव्वं (२) ।

---

(१) अहो मुद्रासनाथो लेख इव ।
(२) तस्या एवैष सन्निधिपरित्यागकारणं भणितव्यम् ।

---

ष्यति न कथमपीत्यर्थः । अत्र कामोन्मादशान्त्यर्थमुपाये कल्पितेऽपि न तत्प्रतीकार इति विशेषोक्तिरलङ्कारः । हरिणीवृत्तं, न समरसलागः षड्वेदैर्हयैर्हरिणी मतेति लक्षणात् ।

(थ) मुद्रासनाथः समुद्रः मुद्रया चिह्नित इति यावत् ।

(द) सन्धिविग्रहयोः संमीलनवियोगयोः सम्बन्धः समवायः ।

(२१) तालीदलमिति । यत् अकठोरतरं कोमलं तालीदलम् इदमिति शेषः, अत्र तालीदले स्तनाङ्कस्य घनचन्दनपङ्कस्य मूर्त्तिः अवयवः यत्र तादृशी मुद्रा दृश्यत इति शेषः, यच्च विसलता एव तनु सूक्ष्मं तान्तवं सूत्रं यस्मिन् तादृशं बन्धनम् अस्तीति शेषः, तत् तस्मात् एषः कस्याश्चित् नायिकायाः अनङ्गलेखः गलितः पतितः । वसन्ततिलकं वृत्तम् ।

(ध) सन्निधिपरित्यागकारणं संसर्गत्यागहेतुः ।

राजा। (विदूषकं कर्णे विमृश्य) विदूरवसुधेव रत्नश-लाकाभूः भवद्वचोयुक्तिरिव (न) रसनिष्यन्दभूमिः। तदपि नाम दर्शय।

विदूषकः। (तथा करोति)।

राजा। (वाचयति) निष्कृप! वराक्याः। (प)

विदूषकः। उम्मुद्दिअ दंसइस्सं (तथा कृत्वा) भो अरअणं रअणकरंडअं अक्खरो लेहो (१)। (फ)

राजा। कामं (ब) करुणगम्भीरः प्रयोगः कन्दलयति मानसम् (विचिन्त्य) अपि तालीदलसंपुटम् (विमृश्य)

---

(१) उन्मुद्र्य दर्शयिष्ये। भो अरत्नं रत्नकरण्डकमनक्षरो लेखः।

---

(न) विदूरवसुधा विदूराख्यपर्वतोपरिभूमिः रत्नशलाकाभूः रत्नाङ्कुरोत्पत्तिनिदानं, विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव तं कुमारसम्भवत्वानुध्यातव्यम्। भवतः वचोयुक्तिः वाङ्निःसरणम्।

(प) निष्कृप! निर्दय! वराक्याः तपस्विन्याः।

(फ) उन्मुद्र्य मुद्रामुद्घाट्य मुद्राबन्धनं कृत्वा इत्यर्थः दर्शयिष्ये। रत्नकरण्डकं रत्नभाजनम् अनक्षरः अक्षरशून्यः।

(ब) करुणगम्भीरः। करुणेन विरहजनितशोकेन गम्भीरः गभीरः दुर्बोध इत्यर्थः प्रयोगः प्रयुक्तो लेख इत्यर्थः मानसं कन्दलयति पर्याकुलयति तालीदलसम्पुटं तालपत्रद्वयं सम्पुटं (टाङ्गा) विमृश्य विविच्य तत्सम्बन्धानुसन्धानेच्छया तस्य तालीदलस्य सम्बन्धो संसर्गो बन्धनभेदः बन्धनरचना यस्याः तादृश्या मन्त्रगुप्तया मन्त्रेण युक्तया परा[illegible] प्रया आत्मानं गोपायन्त्या इत्यर्थः कया चार्दिति शेषः। किञ्चिद् ईषत् कामतन्त्रं मदनविलसितम् आलोचितम् प्रक-टितम्।

तत् सन्धिबन्धनवेषया किञ्चिन्मन्थगुप्तया कामतन्त्रमासूचितं स्यात्।

विदूषकः। (तथा कृत्वा अवलोक्य सहर्षम्) अहो! दे वुद्धिविहवो। किंवा वस्सनं मिअलंछणस्स रोहिणीवल्लहस्स त्ति (१)।

राजा। सविसङ्कुलं (भ) वाचयति।

विधत्ते सोल्लेखं कतरदिह नाङ्गं तरुणिमा
तथापि प्रागल्भ्यं किमपि चतुरं लोचनयुगे।
यदादत्ते दृश्यादखिलमपि भावव्यतिकरम् *
(सवितर्कं विचिन्त्य।)
पाणिग्रहणतो विशीर्णशिरसः स्वेदावलुप्तश्रिय-
स्ता इत्याकृतितो मनाङ् मनसि नः किञ्चित्प्रतीतिं गताः।

---

(१) अहो! ते बुद्धिविभवः किंवा वर्णनं मृगलाञ्छनस्य रोहिणीवल्लभस्येति।

---

(भ) सविसङ्कुलं सव्याकुलितम्।

(*) विधत्ते इति इह संसारे शरीरे वा तरुणिमा तारुण्यं यौवनमित्यर्थः कतरत् अङ्गं सोल्लेखं सम्यक् मार्जितं न करोति अपि तु सर्वमेव करोतीत्यर्थः तथापि तारुण्यस्य सर्वाङ्गमार्जकत्वेऽपीत्यर्थः लोचनयुगे किमपि अनिर्वचनीयं चतुरं सुनिपुणं प्रागल्भ्यं वैदग्ध्यं भवतीति शेषः यत् लोचनयुगं दृश्यात् दर्शनीयात् पदार्थात् अखिलं समस्तमपि भावव्यतिकरं भावसमूहम् आदत्ते गृह्णाति। चतुर्थाङ्के अस्य चतुर्थपादः द्रष्टव्यः। मनोवृत्ति द्रष्टुं मुखरयति दृश्यं प्रति जनमिति। अयमर्थः—मनोवृत्तिः दृश्यं जनं प्रति द्रष्टुं मुखरयति मुखरी भवति कामयते इति भावः। शिखरिणीवृत्तम्।

वैचित्र्यात्पुनरुक्तिलाञ्छनभृतः खण्डेन वाक्येन च
व्याक्षेपं कथयन्ति पक्ष्मलदृशो लेखाक्षरश्रेणयः ॥ २२ ॥

विदूषकः। किं उवेक्खीअदि केलिकदलीकंदलीए (म) करिशुण्डादंडावेट्टो ता एहि अणुसरह्म (१)।

राजा। इदमुभयमनन्यगामि (य) यन्मृगाङ्कानुवर्त्तनं रत्नाकरस्य मम हृदयानुवर्त्तनं च भवतः।

विदूषकः। (अङ्गुल्या निर्दिशन्)। इदो माधवीलदा-

---

(१) किमुपेक्ष्यते केलिकदलीकन्दल्यां करिशुण्डदण्डावेष्टः तदेह्यनुसरावः।

---

(२२) पाणीति। पूर्वोक्ता लेखाक्षरश्रेणयः लिखितवर्णपङ्क्तयः पाणिप्रकम्पतः प्रियतमस्मरणात् करकम्पनात् विशीर्णं शिरो यासां ताः भग्नमात्रा इत्यर्थः, स्वेदेन सत्त्वजनितेन घर्मेण अवलुप्ता विनष्टा श्रीः यासां तथोक्ताः, वैचित्र्यात् व्याकुलत्वात् पुनरुक्तिलाञ्छनभृतः पौनरुक्त्यदोषधारिण्यः तथापि मनाक् ईषत् व्यक्तितः स्पष्टाकारेण अल्पाल्पावयवेन ताः इति नः अस्माकं मनसि किञ्चित् प्रतीतिं गताः विश्वासमापन्नाः सत्यः खण्डेन चतुर्थपादहीनत्वात् असम्पूर्णेन वाक्येन पक्ष्मलदृशः तस्याः व्याक्षेपं चित्तवैकल्यं कथयन्ति सूचयन्ति। शार्दूलविक्रीडितम्।

(म) केलिकदलीकन्दल्यां क्रीडाकदलीमध्ये करिशुण्डादण्डावेष्टः करिणा हस्तिना शुण्डदण्डैः करैः आवेष्टः मण्डलाकारेण वेष्टनं किं कथं उपेक्ष्यते दर्शनीयत्वात् तस्य नोपेक्षणमुचितमिति भावः।

(य) अनन्यगामि नान्यगामि, अन्येन कर्त्तुं न शक्यते इति भावः।

मण्डवं गदा, जं दाणीं मअरद्धअपअसरणि (२) व्व पअवि-
छोली दीसदि, ता णिहुअं अप्पमत्ता भविअ णिरू-
वह्म ( १ ) । (तथा कुरुतः) ।

मृगाङ्कावली । लतान्तरे चन्द्रिकास्पर्शमभिनीय) ।
(संस्कृतमाश्रित्य) ।

प्रियविरहमहोष्मामुर्मुरामङ्गलेखा-
मपि हतकहिमांशो ! मा स्पृश क्रीड़याऽपि ।
इह हि तव लुठन्तःप्लोषपीड़ां भजन्ते
दरजरठमृणालीकाण्डमुग्धा मयूखाः ॥ २३ ॥
(इति द्वित्रिरभिधाय रोदिति) ।

राजा । (विदूषकं प्रति) कारय चक्षुषी पारणम् । (ल)

---

(१) इतो माधवीलतामण्डपं गता यदिदानीं मकरध्वजपदसरणि-रिव पदपंक्तिर्दृश्यते । तन्निभृतमप्रमत्तो भूत्वा निरूपयावः ।

---

( २ ) मकरध्वजपदसरणिः मदनपद्धतिः । निभृतं निःशब्दं अप्रमत्तौ अवहितौ निरूपयावः पश्यावः ।

( २३ ) प्रियेति । हे हतकहिमांशो ! हतकेति आक्षेपव्यञ्जकम् । प्रियविरहेण यः महान् उष्मा सन्तापः यस्य तादृशः आ समन्तात् सर्वाङ्गव्यापीत्यर्थः मुर्मुरः तुषानलः यस्यां तथाभूतां अङ्गलेखां मदीयम् अङ्गमपीत्यर्थः क्रीड़यापि परिहासेनापीति भावः मा स्पृश । हि यतः दरजरठन् ईषत् परिणतं यत् मृणालीकाण्डं तद्वत् मुग्धा मनोज्ञाः तव मयूखाः इह मदङ्गे लुठन्तः पतन्तः सन्तः प्लोषस्य दाहस्य पीड़ां भजन्ते जनयन्ति । मालिनीवृत्तम् ।

( ल ) कारयेति चक्षुषी नयने पारणं कारय, दूरव्यदर्शनेन चरितार्थे कुरु इत्यर्थः ।

अन्तस्तारं तरलतरलाः स्तोकमुत्पीड़यन्तः
पक्ष्माग्रेषु ग्रथितपृषतः कीर्णधाराः क्रमेण।
चित्तातङ्कं निजगरिमतः सम्यगास्त्रवयन्तो
निर्यान्त्यस्याः कुवलयदृशो बाष्पवारां प्रवाहाः॥ २४॥

अपि च, मुक्त्वानङ्गः कुसुमविशिखान् पञ्चकुण्ठीकृताग्रान्।
मन्ये मुग्धां प्रहरति हठात्पत्रिणा वारुणेन।
वारां पूरः कथमपरथा स्फारनेत्रप्रणाली-
वक्त्रोद्दान्तस्त्रिवलिविपिने सारणीसाम्यमेति॥ २५॥

(विदूषकं हस्ते गृहीत्वोपसृत्य सानुरागप्रश्रयम्)।

---

(२४) अन्तरिति। तरलतरलाः अतितरलाः स्तोकम् अल्पम् अन्तस्तारम् अन्तर्गतम् तारम् उत्पीड़यन्तः क्लेशयन्तः पक्ष्मणामग्रेषु ग्रथिताः गुम्फिताः पृषतः बिन्दवः येषां तादृशाः क्रमेण कीर्णा विक्षिप्ता धारा येषां तथाभूताः तथा निजगरिमतः स्वीयगौरवात् चित्तातङ्कं चित्तसन्तापं सम्यक् आस्त्रवयन्तः वर्द्धयन्तः अस्याः कुवलयदृशः नीलोत्पलाक्ष्याः बाष्पवाराम् अश्रूणाम् प्रवाहाः निर्यान्ति निर्गच्छन्ति। मन्दाक्रान्तावृत्तं मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति लक्षणात्।

(२५) मुक्त्वेति। अनङ्गः कामः पञ्च कुण्ठीकृताग्रान् कुण्ठिताग्रान् कुसुमविशिखान् पुष्पबाणान् मुक्त्वा निक्षिप्य हठात् सहसा वारुणेन पत्रिणा शरेण वारुणास्त्रेण इत्यर्थः मुग्धामिमां प्रहरति इति मन्ये सम्भावयामि, अपरथा अन्यथा स्फारे विकाशं गते नेत्रे एव प्रणाल्यौ तयोर्वक्त्रात् मुखात् उद्दान्तः उद्गीर्णः वारां पूरः अम्बुप्रवाहः त्रिवलिरेव विपिनं तस्मिन् सारणीसाम्यं नदीसादृश्यं कथं एति प्राप्नोति, नूनं कामस्य वारुणास्त्रप्रभाव एव इति भावः। उत्प्रेक्षालङ्कारः। मन्दाक्रान्तावृत्तम्।

यस्य कृते वहति जनो
मृदित मृणालोपमानि गात्राणि।
तस्य कृते यदि सोऽ-
पिहि तदखण्डशासनो मदनः ॥ २६ ॥

तदयं समदुःखसुखो जनस्त्वां विरचिताञ्जलिः प्रसारयति। (ब)

मृगाङ्कावली। (स्वगतम् सस्पृहं ससाध्वसं च तमवलोक्य।) किं एसो अणब्भो (भ) वरिसो, असुत्तिसंपुडागमा वा मोत्तिअउप्पत्ति कंचणलट्ठिअ व्व, सहआरीभूदा रीदि व्व कणअत्तणं उवगदा जस्स दंसणमहग्घदा तणू मे पलिभदि। (अपवार्य विचक्षणां प्रति) एसो सो सहि!

---

(२६) यस्येति। यस्य जनस्य कृते निमित्तं जनः मृदितेन मृणालेन उपमा येषां तादृशानि क्लान्तिक्लिष्टानीत्यर्थः गात्राणि वहति, सोऽपि जनः तस्य जनस्य कृते यदि तथैव, तत् तदा मदनः अखण्डम् अस्खलितं शासनं यस्य तथाभूतः। सफलशासनो मदन इत्यर्थः। आर्य्यावृत्तम्।

(ब) प्रसारयति प्रसादयतीत्यर्थः।

(भ) अनभ्रः अभ्ररहितः मेघव्यतिरिक्त इत्यर्थः। अशुक्तिसम्पुटागमा शुक्तिसम्पुटात् आगमः यस्याः तादृशी न भवतीति अशुक्तिसम्पुटागमा मौक्तिकानाम् उत्पत्तिः। काञ्चनयष्टिः काञ्चनाख्यतरुविशेषः सहकारीभूता इव आम्रतरुत्वेन परिणता इव। रीतिः पित्तलाख्यधातुः कनकत्वं स्वर्णत्वम् उपगता प्राप्ता। यस्य तनुः दर्शने महार्घता महामूल्यता मे मम प्रतिभाति यस्य दर्शनं महामूल्यमहं मन्ये इत्यर्थः।

राआ विज्जाहरमल्लो जो सिरीसरस्सइणं वल्लहो मअणसुन्दरी अ जस्स वल्लहा सिरी सरस्सई मअणसुन्दरी अ (१)।

विचक्षणा । आँ । राजा ।

राजा । क्षणेन त्वेवं वक्तव्यं भवति । यो मृगाङ्कावलीवल्लभो यस्य मृगाङ्कावली वल्लभेति । (तां प्रत्यञ्जलिं बध्वा ।)

तरङ्गय दृशोऽङ्गने ! पततु चित्रमिन्दीवरं
स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् ।
क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिमा
व्युदञ्चय मुखं मनाग्भवतु च द्विचन्द्रं नभः ॥ २७ ॥

---

(१) किमेषोऽनघो वर्णः । शुक्तिसंपुटागमा वा मौक्तिकोत्पत्तिः काञ्चनयष्टेरत्र सहकारीभूता, रीतिरिव कनकत्वमुपगता यस्य दर्शनमहार्घता, तनुमे प्रतिभाति । एष स सखि ! राजा विद्याधरमल्लो यः श्रीसरस्वत्योर्वल्लभो मदनसुन्दरी च यस्य वल्लभा श्रीः सरस्वती मदनसुन्दरी च ।

---

( २७ ) तरङ्गयेति । हे अङ्गने ! प्रशस्ताङ्गवति ! दृशः दृष्टीः तरङ्गय तरलीकुरु, चित्रं मनोज्ञम् इन्दीवरं पततु, अधो गच्छतु, दृशा निर्जितत्वादिति भावः । रदच्छदम् अधरं स्फुटीकुरु प्रकटय, विद्रुमः प्रवालमणिः श्वेततां धावल्यं व्रजतु प्राप्नोतु तवाधरस्य यो तस्य लौहित्यं न विकाशते इति भावः । वपुः शरीरं क्षणं अपावृणु आवरणशून्यं कुरु, कालिमा मालिन्यं काञ्चनं स्वर्णं स्पृशतु तवाङ्गवर्णविधौ काञ्चनं मलिनायते इति भावः । तथा मुखं मनाक् अल्पं व्युदञ्चय विशेषेण उन्नताञ्चनं कुरु, यस्मात् नभः आकाशं द्विचन्द्रं चन्द्रद्वयसमन्वितं भवतु चन्द्रोऽयं सकलङ्कः तव मुखन्तु अकलङ्कम् अञ्जनयुक्तत्वेव द्वितीयश्चन्द्र इव विराजते इति भाव । अत्र उपमानभूतेभ्य इन्दीवरादिभ्यः उप-

मृगाङ्कावली। (प) स्वगतम्। भअवदि मिअंकमंडणि जामिणि! सदजामा होहि चित्तसिखंडिदाम सत्तरिसिमण्डलं (१)।

राजा। सखे! न हारलताविरहमर्हत्येषा। न चित्रशिखण्डिदामविना चकास्त्यु दीचीति (स) (कण्ठादवतार्य्य नायिकाकण्ठे हारं विधत्ते।)

विदूषकः। उचिदसमागमो ह एस कं ण रञ्जेदि जं दाणीं णित्तलमुत्ताहलमालालङ्करणो सुन्दरीअणो वक्कोत्तिविभूसणो अ सुकइवाणीबन्धो (२)।

---

(१) भगवति मृगाङ्कमण्डने यामिनि! शतयामा भव। चित्रशिखण्डिदाम सप्तर्षिमण्डलम्।

(२) उचितसमागम एष कं न रञ्जयति। यदिदानीं निस्तलमुक्ताफलमालालङ्करणः सुन्दरीजनो वक्रोक्तिविभूषणश्च सुकविवाणीबन्धः।

---

मेयानां नायिकानयनादीनामाधिक्यकीर्त्तनात् व्यतिरेकालङ्कारः। तदुक्तं दर्पणे। आधिक्यमुपमेयस्योपमानान्न्यूनताथवा। व्यतिरेक इति। पृथ्वीवृत्तम्।

(प) मृगाङ्कमण्डने शशिशोभने। शतयामा शतप्रहरा। यथा सप्तर्षिमण्डलं चित्रशिखण्डिना आङ्गिरसा दाम्ना हारभूषणभूतेन शोभते तथा ते मृगाङ्कवल्लभतया शतयामत्वं शोभते इति भावः।

(स) उदीची उत्तरदिक्।

(ह) उचितसमागमः समुचितसंसर्गः। रञ्जयति प्रीणयति। यत् यस्मात्। इदानीं साम्प्रतम्। निस्तलानि वर्त्तुलानि यानि मुक्ता-

णेपथ्ये। कालिज्जंतु लदामंडवपहुदीणि विलासट्ठाणाइं दिज्जंतु खलक्किआदुआराइं, णिपतंतु च) अग्गलाओ, चिट्ठंतु जहा णिअट्ठाणं, वाहिरदो जामल्लिआ सोविदल्ला, एसा वारविलासिणीजणगहिदहत्थदीविउज्जोअजणिद-दिवसव्व देवी सिद्धणरेंददिण्णोसधसंठिदमंजिट्ठत्थवअसहस्सालंकिदं माहवीलदामंडवं दट्ठुमाअदित्ति (१)।

विचक्खणा। (सत्रासम्) भट्टा विसज्जीअदु प्पिअ सही (२)।

---

(१) क्षाल्यन्तां लतामण्डपप्रभृतीनि विलासस्थानानि, दीयन्तां खलक्रियाद्वाराणि [आममानागमद्वाराणि मशकसदृशानि भाषायां खिड़कीति प्रसिद्धानि] निपतन्तु अर्गलाः, तिष्ठन्तु यथा निजस्थानं वाहिरतो [बहिः प्रदेशे] जामल्लिका सौविदल्लाः। एषा वारविलासिनीजनगृहीतहस्तदीपिकोद्योतजनितदिवसेव देवी सिद्धनरेन्द्र दत्तौषधसंस्थितमाञ्जिष्ठस्तवकसहस्रालंकृतं माधवीलतामण्डपं द्रष्टुमायातीति।

(२) भट्टा—विसृज्यतां प्रियसखी।

---

फलानि तेषां माला अलङ्करणं यस्य तादृशः। वक्रोक्तिरलङ्कारविशेषः यदुक्तं दर्पणे। अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद् यदि। अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधेति। सा एव विभूषणं यस्य तादृशः सुकवीनां वाणीबन्धः वाक्यरचना शोभते इति शेषः।

(च) दीयन्तां बध्यन्ताम्। निपतन्तु अर्गलाः द्वाराणि अर्गलनिबद्धानि भवन्तु इत्यर्थः जामल्लिकाः प्रहरिण्यः किङ्कर्यः। सौविदल्लाः कञ्चुकिनः। सिद्धेन विद्यायां सुशिक्षितेन नरेन्द्रेण विषवैद्येन दत्तेन औषधेन संस्थितेन सम्यक् स्थितेन औषधप्रभावादिति भावः माञ्जिष्ठ-स्तवकसहस्रेण अलङ्कृतं विराजितम्। पारावतशकुन्ता इव कपोत-पक्षिण इव पञ्जरनिबद्धाः पञ्जरेषु बद्धाः देव्यामागतायां सर्वेषामेव नः महानर्थो भावी स्यात् अतः शीघ्रमेव प्रस्थानं श्रेय इति भावः।

राजा । अभ्यर्थये ते दयां यदि प्रार्थनाभङ्गं न करोषि ।

विदूषकः । वअस्स तुरिदं विसज्जोअदु, अस्सधा पारावदसउंद व्व पञ्जरणिरुद्धा चिट्ठिस्सामो ( १ ) । (इति यथायथं परिक्रम्य निष्क्रान्ताः सर्वे ) ।

इति श्रीकविराजराजशेखरविरचितायां विद्धशालभञ्जिकाख्यनाटिकायां तृतीयोऽङ्कः समाप्तिमगात् ।

---

## अथ चतुर्थोऽङ्कः ।

(नेपथ्ये । सुप्रभातं क) देवस्य कर्पूरवर्षस्य। सम्प्रति हि ।

व्रजत्यपरवारिधिं रजतपिण्डपाण्डुः शशी
नमन्ति जलबुद्बुदप्रतिमपङ्क्तयस्तारकाः ।
कुरण्टकविपाण्डुरं दधति धाम दीपाङ्कुरा-
श्चकोरनयनारुणा भवति दिक्च सौत्रामणी ॥ १ ॥

---

(१) वयस्य ! त्वरितं विसृज्यताम् । अन्यथा पारावतशकुन्ता(?) इव पञ्जरनिरुद्धाः स्थास्यामः ।

---

( क ) प्रभातं वर्णयति ।

( १ ) व्रजतीति । रजतपिण्डवत् पाण्डुः धवलः शशी अपरवारिधिं पश्चिमसागरं व्रजति गच्छति । जलबुद्बुदप्रतिमाः जलस्फोटसदृशाः तारकाः नक्षत्राणि नमन्ति नता भवन्ति । दीपानाम् अङ्कुराः कुरण्टकं पीतझिण्टीपुष्पं तद्वत् विपाण्डुरं विशेषेण पाण्डुरं धाम दधति । सौत्रामणी ऐन्द्री दिक् प्राचीत्यर्थः चकोरनयनवत् अरुणा रक्ता भवति च । पृथ्वीवृत्तम् ।

(ततः प्रविशतो विबुद्धो विदूषकः सुप्ता च ब्राह्मणी ।)

विदूषकः । भो पुत्ताणं मादे ! उट्ठे हि संभं वंदिदुं एहि अतिक्कंता रअणी सुणु णरेंद वंदिणो कप्पूरखंडस्स पभाद-भोआवलिं (ख) (विमृश्य) कधं देवीए गरिट्ठगोट्ठीजणिदजा-गरणकिलंतसुत्ता बह्मणी अज्ज वि णिद्दं ण मुंचदि । तदो पडिवालेमि जदो ण सुहसुत्तो पडिबोधिदव्व त्ति बह्मणा मंतअंति (१) ।

ब्राह्मणी । उत्स्वप्नायते (ग) ।

ब्राह्मणी विसत्तो विअक्खणामुहेण देवीए भट्टा । जधा । ओल्लागदस्स (घ) मिअंकवम्मस्स पिअबहिणी मिअंका-वली णाम सिणिहेण भादुअं दट्ठुं माअदा । संदिट्ठं च मे

---

(१) भो पुत्राणां मातरुत्तिष्ठ सन्ध्यां वन्दितुम् । एहि अति-क्रान्ता रजनी । शृणु नरेन्द्रवन्दिनः कर्पूरखण्डस्य प्रभातभोगावलिम् । कथं देव्या गरिष्ठगोष्ठीजनितजागरणक्लान्ता सुप्ता ब्राह्मणी अद्यापि निद्रां न मुञ्चति । ततः प्रतिपालयामि यतः न सुखसुप्तः प्रतिबोधयितव्य इति ब्राह्मणा मन्त्रयन्ति ।

---

(ख) प्रभातभोगावलीं प्राभातिकीं भोगावलिं सुखभागसूचिकां गीतिकामित्यर्थः । गरिष्ठगोष्ठीजनितजागरणक्लान्ता गरिष्ठायां महत्यां गोष्ठ्यां सभायां उपस्थिततया जनितं यत् जागरणं तेन क्लान्ता क्लिष्टा ।

(ग) उत्स्वप्नायते निद्रावस्थायां यः प्रलपणं करोति स उत्स्वप्नः स इव आचरतीत्यर्थः ।

(घ) ओल्लागतस्य तदाख्यदेशात् आगतस्य । सन्दिष्टं वाचिकं प्रेषितं मातुलचन्द्रवर्मश्रिया मातुलस्य चन्द्रवर्मणः श्रिया लक्ष्म्या

मादुलचंदवम्मसिरिणा मादुलाणीए हारलदाए, जधा, एसा दे बहिणी मिअंकावली दैवण्णएहि कहिदं चक्कवत्तिघरिणीभावा एसा तुए उचिदं वरं लंभइदव्वा त्ति। तदो देवी देवं विस्सवेदि, ण तुम्हाहिंतो अण्णो वरो एदाए जोग्गो अत्थि। जदो पउमराअमणी राआवलिं अलंकरेदि। ता परिणेदु अज्जउत्तो। अत्तणो सिरी असहत्थगआ कादव्वा ण होदि। ण एदं आसंकिदव्वम्। किं तम्। देवी अत्तणो सा यत्तणेण पअट्टदि। जदो महाउलप्पसूदाणं भत्तुणो प्पिअं प्पिअं ण हु अत्तणो प्पिअं प्पिअं त्ति। किं च। पुणो परिणाविदो एव्व अज्जउत्तो मए।

---

(१) विज्ञप्ता विचक्षणामुखेन देव्या भर्त्ता। यथा कोषागतस्य मृगाङ्कवर्म्मणः प्रियभगिनी मृगाङ्कावली नाम स्नेहेन भ्रातरं द्रष्टुमागता सन्दिष्टं च मे मातुलचन्द्रवर्म्मश्रिया मातुलान्या हारलतया च। यथा, एषा ते भगिनी मृगाङ्कावली दैवज्ञैः कथितं चक्रवर्त्तिगृहिणी-

लक्ष्मीलक्षणया इत्यर्थः। कथितचक्रवर्त्तिगृहिणीभावा कथितः चक्रवर्त्तिनः सम्राजः गृहिणीभावः गृहिणीत्वं यस्यास्तादृशी य एनां परिणेष्यति स सम्राट् भविष्यतीत्यर्थः। लम्भयितव्या प्रापणीया। पद्मरागमणिः आकाशे पद्मरागवत् शोभनत्वात् चन्द्रं लक्षयति। यथा चन्द्रो राकां पौर्णमासीमलङ्करोति तथा त्वमेवैषा अलङ्करणीयेति भावः। आशङ्कनीयं देव्या कोपावेशवशात् इदं सन्दिष्टमिति न भेतव्यमित्यर्थः। आत्मनः स्वस्य बलेन स्वेच्छया इत्यर्थः। प्रवर्त्तते अस्मिन् व्यापारे इति शेषः। परिणायितः विवाहितः। देव्य एव परिणीय दत्तवत्य इति देवी एव परिणाय्य दत्तवतीति पाठः सङ्गच्छते। प्रतिकर्त्तुं परिशोधयितुम्। उत्तर इत्यत्र उत्तरत्र इति पाठः समीचीनः।

तं जधा, मअधाहिवस्स सुदं अणंगलेहं, मालवणरेंदस्स दुहिदं रअणावलीं प्पिअदंसणं अ, पंचालणाहस्स तणअं विलासवदीं, अवंतीस्सरसुदं केलिवदीं, जालंधरेसकुमारिअं लीलावदीं, केरलराअपुत्तिं पत्तलेहं त्ति, देवीओ एव्व परिणीअ दिस्सवंतीओ । ता अज्ज दुदीअप्पहरे विआहलग्गो त्ति उणो उणो भणिदेण महाराएण तह त्ति पड़िस्सादं, ता मेहलावुत्तंतं पड़िकादुं अलीअविवाहेण विडंबीयतां भट्टा । कुविदस्स मे भातुणो अण्णविवाहमहुस्सवो उत्तरो हुविस्सदि ( १ ) ।

विदूषकः । ( विहस्य ) देवो धम्मो वा जाणिस्सदि जो एत्थ विडंबिदव्वो । ( विचिन्त्य ) ता चिरं पाअद्दव्वा

---

भाजा एषा त्वयोचितं वरं लम्भयितव्येति । ततो देवी देवं विज्ञापयति । न युष्मत्तोऽन्यो वर एतस्या योग्योऽस्ति । यतः पद्मरागमणी राकावलीमलङ्करोति । तत्परिणयत्वार्यपुत्रः । आत्मनः सौरन्ध्यहस्तगता कर्त्तव्या न भवति । नैतदाशङ्कनीयम् । किं तत् । देवी आत्मनः सा यत्नेन प्रवर्त्तते । यतो महाकुलप्रसूतानां भर्तुः प्रियं प्रियं नत्वात्मनः प्रियं प्रियमिति ।। किं च । पुनः परिणायित एवार्यपुत्रो मया । तद्यथा, मगधाधिपस्य सुतामनङ्गलेखां, मालवनरेन्द्रस्य दुहितरं रत्नावलीं प्रियदर्शनां च, पञ्चालनाथस्य तनयां विलासवतीमवन्तीश्वरसुतां केलिवतीं, जालन्धरेशकुमारिकां लीलावतीं, केरलराजपुत्रीं पत्रलेखामिति देव्य एव परिणीय दत्तवत्यः । तदद्य द्वितीयप्रहरे विवाहलग्नमिति पुनः पुनर्भणितेन महाराजेन तथेति प्रतिज्ञातम्, तन्मेखलावृत्तान्तं प्रतिकर्तुमलीकविवाहेन विडम्बयतां भर्त्ता । कुपितस्य मे भ्रातुरन्यविवाहमहोत्सव उत्तरो भविष्यति ।

( १ ) देवो धर्मो वा जानाति योऽत्र विडम्बयितव्यः । तत् चिरं

जुण्णमज्जरी (ङ) कंजिअं दुद्धं ति। कुवलअमालाए उण मह विलंबणत्थं महिलाए परिणीदा (ऊर्ध्वमवलोक्य) महदी वेला वट्टदि विउद्धावेमि बह्मणीं, बह्मणि! उट्ठेहि उट्ठेहि, देवी तुमं वाहरदि (च) (१)।

ब्राह्मणी। (विबोधनाटितकेनोत्थाय) अइ पच्चुसं (च) वट्टदि। (तं विलोक्य) हंहो मिअतिण्हिअजामादुअ! (छ) तुमं परमेस्सरपस्सवट्टी होहि। अहं उण देवी अणुसरिस्सं (२) (इति परिक्रम्य निष्क्रान्तौ। प्रवेशकः)।

---

प्रापयितव्या जीर्णमार्जारी काञ्जिकं दुग्धमिति। कुवलयमालायाः पुनर्मया विडम्बनार्थं महिलया परिणीता। महती वेला वर्तते विबोधयामि ब्राह्मणीं, ब्राह्मणि! उत्तिष्ठोत्तिष्ठ, देवी त्वां व्याहरति।

(२) अये! प्रत्यूषं वर्तते। हंहो मृगतृष्णिकाजामातस्त्वं परमेश्वरपार्श्ववर्ती भव। अहं पुनर्देवीमनुसरामि।

---

(ङ) जीर्णमार्जारी वृद्धविडालो दुग्धमिति कृत्वा काञ्जिकं पर्युषितान्नजलं प्रापयितव्या पाययितव्या इत्यर्थः, यथा जीर्णमार्जारी काञ्जिकेन प्रतार्यते तथा कुवलयमालायाः विडम्बनार्थं मया महिला परिणीतेति भावः।

(च) विबोधयामि जागरयामि। व्याहरति आह्वयति। प्रत्यूषं प्रभातम्।

(छ) मृगतृष्णिकाजामातः! मृगतृष्णिका दुराशा तस्या जामातः दुहितृपते! दुराशात्मजाया मम स्वामिन् इत्यर्थः। दुराशां मातरमिवाश्रित्य राज्ञीं सेवत इत्यतोऽस्या दुराशात्मजात्वमिति भावः। परमेश्वरस्य राजचक्रवर्तिनः।

( ततः प्रविशति राजा विदूषकश्च ) ।

राजा । ( मदनातपयोः पीड़ामभिनीय ) सखे ! सम्प्रति शैशवादपक्रामति (ज) ग्रीष्मसमयः ।

रजनिचरमयामेष्वादिशन्ती रतेच्छां
किमपि कठिनयन्ती नारिकेलीफलाम्भः ।
अपि परिणमयित्री राजरम्भाफलानां
दिनपरिणतिभोग्या वर्तते ग्रीष्मलक्ष्मीः ॥ २ ॥

अपि च । जलार्द्राः शय्यायां बिसकिसलयैः केलिवलयाः
शिरीषैरुत्तंसा विचकिलमयी हाररचना ।
शुचा वेणाक्षीणां मलयजरसार्द्राश्च तनवो
विना तन्त्रं मन्त्रं रतिरमणमृत्युञ्जयविधिः ॥ ३ ॥

---

( ज ) शैशवात् बाल्यात् अपक्रामति अपसरति प्रौढ़तामापद्यते इत्यर्थः ।

( २ ) ग्रीष्मं वर्णयति रजनीति । चरमयामेषु चरमयेषु प्रहरिक-कार्येषु अनभाप्रावरपोत्सर्थः रजनिचरं प्रहरिकं रतेच्छां सम्भोगेच्छाम् आदिशन्ती, नारीकेलीफलानाम् अम्भः जलं किमपि अनिर्वचनीयं यथा तथा कठिनयन्ती शय्यरूपेण परिणमयन्ती राजरम्भाफलानामपि परि-णमयित्री पक्वतां साधयन्ती तथा दिनपरिणतौ दिवसावसाने भोग्या सुखभोगयोग्या ग्रीष्मलक्ष्मी निदाघश्रीः वर्तते । मालिनीवृत्तम् ।

( ३ ) जलार्द्रा इति । शुचौ ग्रीष्मे एणाक्षीणां मृगनयनानां केलिवलयाः विलासवलयालङ्काराः पद्मानां बिसकिसलयैः मृणाल-लताभिः विरचिता अत एव जलार्द्राः शिरीषैः कुसुमैः उत्तंसाः कर्ण-भूषणानि, हाररचना विचकिलमयी विचकिलाख्यकुसुममयी, तनवः शरीराणि च मलयजरसार्द्राः चन्दनरसविक्ताश्च भवन्तीति शेषः, अतः तन्त्रं बाह्यविघ्ननिवारणोपायं चेष्टाविशेषं कायबन्धनादिकं मन्त्रम्

विदूषकः। एवं णेदं। अम्हारिसखल्लाडस्स (झ) फुलिंग-उप्पादओ धम्मो वट्टदि (१)।

राजा। (निःसहं विहस्य) अतिललाटंतपस्तपनो नखंपचाश्च पथि पांसवः (ञ)। तदसूर्यंपश्याश्च वर्त्तन्ते राजदाराः।

अपिच, हरन्ति हृदयानि यच्छ्रवणशीतला वेणवो
यददेति करंविता शिशिरवायुना वारुणी।
भवन्ति च हिमोपमाः स्तनभुवो यदेणीदृशो-
रुचेरुपरिसंस्थितो रतिपतेः प्रसादो गुरुः॥ ४॥

---

(१) एवमेतत्। अस्मादृशखल्वाटस्य स्फुलिङ्गोत्पादको धर्मो वर्त्तते।

---

ष्यान्तरदोषोपशमनोपायभूतं वाग्व्यापारविशेषं विना रतिरमणस्य कामस्य मृत्युञ्जयविधिः मरणनिवारणव्यापारः वर्त्तते इति शेषः, नारीणां तत्तदङ्गप्रसाधनादेव कामः प्रवर्त्तते तदर्थं प्रक्रियान्तरं नावश्यकमिति भावः। शिखरिणीवृत्तं, रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात्।

(झ) अस्मादृशखल्वाटस्य खल्वाटः टेको इति टाक इति च प्रसिद्धः तादृशस्य अस्मादृशस्य इत्यर्थः स्फुलिङ्गोत्पादकः खल्वाटात् टाक इति प्रसिद्धात् अग्निकणोत्पादकः घर्मः निदाघः।

(ञ) तपनः सूर्य्यः। नखम्पचाः नखदाहका इत्यर्थः। पांसवः रजांसि।

(४) हरन्तीति। श्रवणशीतलाः श्रुतिसुखावहाः वेणवः वंशीस्वनाः यत् हृदयानि हरन्ति, यच्च शिशिरवायुना शीतलसमीरणेन करंविता मिश्रिता स्निग्धीकृतामित्यर्थः वारुणीं मदिराम् अदति

एवं च सखे ! संशृणुमः ।

मूलं बालकवीरुधां सुरभयो जातीतरूणां त्वचः
सारश्चन्दनशाखिनां किसलया आर्द्राश्चशोकस्य च ।
शैरीषी कुसुमोन्नतिः परिणमन्मोचस्य सोऽयं गणो
ग्रीष्मे शोषहरः पुरा किल ददे दग्धाय पञ्चेषवे ॥ ५ ॥

( निःसहतामभिनीय )। (ट)

अपि शिशिरतरोपचारयोग्यं
द्वितयमिदं युगपन्न सह्यमेव ।
जरठितरविदीधितिश्च कालो
दयितजनेन समं च विप्रयोगः ॥ ६ ॥

---

पिबन्ति जना इति शेषः, यत्र एणीदृशः मृगनयनायाः स्तनभुवः स्तना-भोगाः हिमोपमा भवन्ति, अयं रतिपतेः कामस्य रुषेः अभिलाषस्य उपरि गुरुः प्रसादः संस्थितः महानयं कामावेशवर्द्धनकारीति भावः । पृथ्वीवृत्तम् ।

( ५ ) मूलमिति । बालकवीरुधां बाललतानाम् उशीराणा-मित्यर्थ मूलं, जातीतरूणां सुरभयः सुगन्धाः त्वचः वल्कलानि, चन्दन-शाखिनां चन्दनतरूणां सारः, अशोकस्य आर्द्राणि किसलयानि पल्लवाः, शैरीषी शिरीषसम्बन्धिनी कुसुमानाम् उन्नतिः विकासः तथा परिणमन् विकासं गच्छन् मोचः रम्भाकुसुमञ्च सः अयम् शमहरः सन्तापहरः गणः एतत् सर्वमित्यर्थः पुरा पूर्वं ग्रीष्मेण कामसुहृदेति भावः दग्धाय हरनयनहुताशनेनेति शेषः पञ्चेषवे पञ्चबाणाय कामाय ददे दत्तः किल किलेति प्रसिद्धौ अलीके वा । शार्दूलविक्रीड़ितं वृत्तम् ।

(ट) निःसहताम् असह्यताम् अभिनीय नाट्येन प्रकाश्य ।

( ६ ) अपीति । अयि भोः जरठिता अतिप्रवृद्धा रवेः सूर्यस्य दीधितिर्यत्र तादृशः कालः ग्रीष्मसमयः, दयितजनेन प्रियजनेन समं

नेपथ्ये । दोलालिआहिं कुंचिदसरलदीहचरणाहिं कडिज्जइ वलइअकरजुअलंचिअणेउराहरणं (ठ) । करजुअणिविड़पीड़िअपेरंतविणिग्गअकडापा । छीड़िज्जइ सहीपड़िच्छिअकणअकिंकिणीओ कुज्जोदरदरसिढ़िलिदकंचुअत्यइदथणहराहिंतो अवणिज्जइ उड्ढकराग्गकट्ठणुधेलंतवसणं (१) ।

राजा । वयस्याभिः सह दोलाविहारं विभाव्य (ड) (विदूषकं प्रति) सखे !

---

(१) दोलालिकाभिः कुञ्चितसरलदीर्घचरणाभिः क्षण्यतेव वलयितकरयुगलाञ्चितनूपुराभरणम् । करयुगलनिविड़पीड़ितपर्यन्तविनिर्गतकलापा मुच्यन्ते सखीप्रतीच्छितकनककिङ्किणीकाः कुञ्जोदरदरशिथिलितकञ्चुकस्थागतस्तनभरादपनीयते ऊर्ध्वकराग्रकर्षणोद्वेल्लद्वसनम् ।

---

सह विप्रयोगः वियोगस्य शिशिरतरेण अतिशीतलेन उपचारेण प्रक्रियया योग्यं शमनीयम् इदं द्वितयं युगपत् समकालं नैव सह्यं सोढुं शक्यम् । पुष्पिताग्रावृत्तम्, अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा इति लक्षणात् ।

(ठ) दोलालिकाभिः दोलायां स्थिताभिः आलिकाभिः वयस्याभिः । कुञ्चितसरलदीर्घचरणाभिः कुञ्चितौ कुण्डलीकृतौ सरलौ दीर्घौ चरणौ याभिः तथाभूताभिः । वलयितकरयुगलाञ्चितनूपुराभरणं वलयितेन वलययुक्तेन करयुगलेन आञ्चितानि ग्रहणात् पूजितानि नूपुराभरणानि यस्मिन् तत् यथा तथा क्रीड्यते ।

(ड) वयस्याभिः सह प्रियाया इति शेषः दोलाविहारं हिन्दोलनं विभाव्य दृष्ट्वा अनुध्याय वा ।

मां निधाय हृदये स्मरतप्ता
दोलिकाविहरणं स्वसखीभिः।
स्वीकरोति यदि किन्नरकण्ठी
कार्मुकं वहतु जैत्रमनङ्गः॥ ७॥

विदूषकः। विअक्खणावअणादो जाणीअदि पाणिपीड़णपुव्वं दे दाविदो (ढ) अप्पा (१)।

राजा। स च चतुष्पदीपर्य्यवसितः श्लोकः प्राभृतीकृतः (ण)।

विदूषकः। ता प्पसादं कदुअ पठदु पिअवअस्सो तं सिलोअं (२)।

---

(१) विचक्षणावचनात् ज्ञायते पाणिपीड़नपूर्वं ते दापित आत्मा।
(२) तत् प्रसादं कृत्वा पठतु प्रियवयस्यस्तं श्लोकम्।

---

(७) मामिति। यदि किन्नरकण्ठी मधुरभाषिणी इयं मां हृदये निधाय स्मरतप्ता कामसन्तप्ता स्वसखीभिः दोलाविहरणं स्वीकरोति, तदा अनङ्गः कामः जैत्रं जयसाधनं कार्मुकं वहतु। स्वागतावृत्तं, स्वागता रनभगैर्गुरुणा च इति लक्षणात्।

(ढ) पाणिपीड़नपूर्वं पाणिपीड़नात् परिणयनात् पूर्वं दापितः प्रदत्तः स्वार्थे ञ्यन्तोऽयं प्रयोगः। अनया इति कर्त्तृपदमूह्यम्। अथवा दापितः देव्या इति शेषः।

(ण) चतुष्पदीपर्य्यवसितः चतुष्पद्या चतुर्भिश्चरणैः पर्य्यवसितः परिसमापितः। प्राभृतीकृतः उपहारीकृतः, उपढौकनत्वेन मह्यं प्रदत्त इत्यर्थः।

राजा। पठति—

विधत्ते सोल्लेखं कतरदिह नाङ्गं तरुणिमा
तथापि प्रागल्भ्यं किमपि चतुरं लोचनयुगे।
यदादत्ते दृश्यादखिलमपि भावव्यतिकरं
मनोवृत्तिर्द्रष्टुं मुखरयति दृश्यं प्रति जनम् ॥ ८ ॥

किञ्च, स्वकण्ठकाण्डात् सुदृशोऽवतार्य
स्वप्नेऽर्पितो यो मम कन्धरायाम्।
पुनर्मया तत्कुचसीम्नि मुक्तो
हारः स च प्राभृतमत्र जातः ॥ ९ ॥

विदूषकः। (स्मरणमभिनीय) भो पिअवअस्स ! किं पि रहस्सं पुच्छीअसि ? (१)।

राजा। कथ्यते।

---

(१) भोः प्रियवयस्य ! किमपि रहस्यं पृच्छ्यसे ?

---

(८) तरुणिमा नूतनभावम् इह अस्मिन् देहे कतरत् किम् अङ्गम् अवयवं सोल्लेखं न विधत्ते अपि तु सर्वमेवाङ्गमित्यर्थः, शरीरसर्वावयवेषु तरुणत्वमापन्नेषु सत्स्वपि लोचनयुगे नयनद्वये किमपि अनिर्वचनीयं चतुरं सुन्दरं प्रागल्भ्यं प्रगल्भता अस्त्येव। यत् यस्मात् दृश्यात् दर्शनीयवस्तुजातात् अखिलं समग्रं भावव्यतिकरं भावमिश्रणम् आदत्ते गृह्णाति अतः कारणात् मनोवृत्तिः प्रतिजनं दृश्यं दर्शनीयं द्रष्टुं मुखरयति एकत्रैव समग्रदृश्यभावलाभादिति भावः।

(९) स्वकण्ठकाण्डादिति। सुदृशा सुनयनया अनया स्वकण्ठ-काण्डात् निजगलदेशात् अवतार्य स्वप्ने मम कन्धरायां ग्रीवायां गले इत्यर्थः यः हारः अर्पितः, स च मया पुनः तस्याः अत्र कुचसीम्नि

विदूषकः। मिअंकावलीकुवलअमालाणं केत्तिअं अंतरं ? (१)।

राजा। आस्तां परकलत्रं हि सा वर्त्तते।

विदूषकः। णं पत्थिवव्ववहारे अणभिण्णोऽहं जाणवदो (त) उण उण सालभज्जं अदुभज्जं त्ति भणादि। ता कधेसु केत्तिअं अंतरं त्ति मिअंकावलीकुवलअमालाणं ? ( २ )।

राजा। यावदन्तरं मृगाङ्कावलीकुवलयमालयोः।

विदूषकः। तं एव्व पुणो भणंतेण किं भणिदं होदि ( ३ )।

राजा। तर्हि दृष्टान्तान्तरेण कथ्यते। यावदन्तरं घनसारागरुसारयोः ( थ )।

---

( १ ) मृगाङ्कावलीकुवलयमालयोः कियदन्तरम् ?

( २ ) ननु पार्थिवव्यवहारे अनभिज्ञोऽहं जानपदः पुनः पुनः शालभार्य्यामर्धभार्य्यामिति भणति। तत् कथय कियदन्तरमिति मृगाङ्कावलीकुवलयमालयोः ?

( ३ ) तदेव पुनर्भणता किं भणितं भवति।

---

स्तनतटे सक्तः अर्पितः सन् प्राभृतम् उपहारः जातः सम्पन्नः। उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिवृत्तम्।

( त ) पार्थिवव्यवहारे राजव्यवहारे। जानपदः जनपदवासी न तु नागरिक इत्यर्थः।

( थ ) घनसारागुरुसारयोः घनसारः चन्दनः अगुरुसारः गन्धतरुभेदः तयोः।

विदूषकः । सुट्ठदरं ण जाणीअदि (१) ।

राजा । ज्ञाप्यते ।

लाटीचम्पकपिञ्जरैरवयवैर्दूर्वानिभैः कुन्तलैः
पूर्वा रत्नमयीं बिभर्त्ति रचना मन्या तु मुक्तामयीम् ।
इत्थं द्वे अपि ते विलाससदने देवस्य चेतोभुवः
प्राच्याः किं तु नितान्तनिर्जितजगल्लावण्यपण्यं वपुः ॥१०॥

सखे ! किं पुनरनुपपन्नमेवेदं (द) यदुत मां देवी परिणाययिष्यतीति ।

विदूषकः । कुदो दिट्ठे अणुववण्णं (ध) णाम । (पुरो दर्शयन्) सम्बन्धिणीचेड़ीओ आगच्छंतीओ दीसंदि (२) ।

---

(१) सुष्ठुतरं न ज्ञायते ।

(२) कुतो दृष्टेऽनुपपन्नं नाम । सम्बन्धिनीचेट्यः आगच्छन्त्यो दृश्यन्ते ।

---

(१०) लाटीति । पूर्वा प्रथमा मृगाङ्कावली लाटीचम्पकपिञ्जरैः लाटदेशीयचम्पकसदृशैः अवयवैः अङ्गैः दूर्वानिभैः नीलैरित्यर्थः कुन्तलैः केशपाशैः रत्नमयीं रचनां सृष्टिं बिभर्त्ति, अन्या कुवलयमाला तु मुक्तामयीं बिभर्त्तीति शेषः । इत्थं द्वे अपि ते मृगाङ्कावलीकुवलयमाले देवस्य क्रीड़ाशीलस्य चेतोभुवः कामस्य विलाससदने लीलागृहस्वरूपे वर्त्तेते । किन्तु प्राच्याः पूर्वाया मृगाङ्कावल्याः वपुः शरीरं नितान्तम् अत्यर्थं निर्जितं जगतः लावण्यरूपं पण्यं विक्रेयवस्तु येन तादृशं निरुपममिति वर्त्तुलार्थः । शार्दूलविक्रीड़ितं वृत्तम् ।

(द) अनुपपन्नम् अयुक्तम् अथवा असम्भवम् ।

(ध) दृष्टेऽनुपपन्नमित्यत्र दृष्टमनुपपन्नमिति साधु ।

राजा। का पुनस्ते सम्बन्धिनी (न)?

विदूषकः। देवी।

राजा। (विहस्य) तदेहि चित्रशालिकामधितिष्ठावः। (तथा तिष्ठतः)।

(ततः प्रविशन्ति नेपथ्ये पेटिकाहस्ताश्चेट्यः, सर्वाः परिक्रामितकेन)।

एका। हला तरंगिए! एकहिं उण महाराओ पेक्खिदव्वो (१)।

द्वितीया। सहि कुरंगिए! जहिं आसण्णविआहकोदूहलप्फुरिदो जणो दीसदि (२)।

अन्या। अयि विअक्खणे! किं विअ तरंगिआए मंतिदं। जो सहस्साणं महिसीणं पाणिग्गही तस्स कित्तिओ विअ कोदूहलकलकलो (३)।

अपरा। प्पिअसहि विअक्खणे! किं णु क्खु अणहिण्णासि कंदप्पचरिदाणं णवकोदूहली कामिजणो (४)।

---

(१) हला तरङ्गिके! कुत्र पुनर्महाराजः प्रेक्षितव्यः?

(२) सखि कुरङ्गिके! यत्रासन्नविवाहकौतूहलप्रस्फुरितो जनो दृश्यते।

(३) अयि विचक्षणे! किमिव तरङ्गिकया मन्त्रितम्। यः सहस्राणां महिषीणां पाणिग्राही तस्य कियानिव कौतूहलकलकलः।

(४) प्रियसखि विचक्षणे! किं नु खलु अनभिज्ञासि कन्दर्पचरितानां नवकौतूहली कामिजनः।

---

(न) सम्बन्धिनी स्त्री।

तरङ्गिणी। (पुरोऽवलोक्य)। एस भट्टा पंडुरपरिक्खामंगो (प) प्पहादपुस्सिमाचंदो विअ सणिस्सराणुगदो अज्जचाराअणिद्दिदीओ चित्तसालिआरुहेसे दीसेदि।

सर्वाः। (समुपसृत्य) जेदु जेदु भट्टा। देवी विण्णवेदि, आसण्णं लग्गं ता इमं णेवत्थमलंकरिअ अहिट्ठीअदु विआहचउक्करिआ (१)।

राजा। यदादिशति देवी।

विदू। (आत्मानं निर्वर्ण्य) भोदीओ संबंधिअस्स जणस्स वासभोज्जे किमुत्तरम् (फ) (२)।

चेट्यः। इदं दास्सामो (३)।

विदू। किं विअ तं? (४)।

---

(१) एष भर्त्ता पाण्डुरपरिक्षामाङ्गः प्रभातपूर्णिमाचन्द्र इव शनैश्चरानुगत आर्य्यचारायणद्वितीयश्चित्रशालिकाद्वारोद्देशे दृश्यते। जयतु जयतु भर्त्ता। देवी विज्ञापयति, आसन्नं लग्नं, तदिदं नेपथ्यमलङ्कृत्याधिष्ठीयतां विवाहचतुष्किकाम्।

(२) भवत्यः सम्बन्धिनोऽस्य जनस्य वासभोज्ये किमुत्तरम्।

(३) इदं दास्यामः।

(४) किमिव तत्?

---

(प) पाण्डुरपरिक्षामाङ्गः पाण्डुरं परिक्षामं क्षीणम् अङ्गं यस्य तादृशः। शनैश्चरानुगतः शनिग्रहानुसृतः। विवाहचतुष्किकां विवाहाय रचितां चतुष्किकां चतुस्तम्भमयीं शालाम्।

(फ) अस्य जनस्य मम इत्यर्थः वासभोज्ये वासगृहस्थितौ भोज्ये भोजनीयविषये किम् उत्तरं किं प्रस्तुतं तत्र उत्तरं दीयतामिति भावः।

प्रिय: । जं कंकेलितरुणो दोहलअं जं अ भअवन् तिलोअणो सीस्से समुद्दहइ (ब) (१)।

विदू । (दण्डकाष्ठमुद्यम्य) आः दासीओ महाराअपिअवअस्सं पिंगलिआबह्मणीवल्लहं ससत्ताणं पढिदद्ध-पाद्दअं महाबह्मणं अधिक्खिवध । ता इमिणा तुह्मारिसचेडोजणचित्तवुत्तिकुडिलेण दंडकठ्ठेण भुजंगजणजुगुप्सिआइं (भ) वअणाइं करिस्सं (२)।

तरं । मरिसदु मरिसदु अज्जो, संबंधिओत्ति तुए सह देवीविलासिणीओ (म) मक्करं करेंति (३)।

अन्या । अलं मक्करेण दुव्वासो (य) अज्जचाराअणो (४)।

तरं । सुवासो हुविस्सदि संपदं एव्व, ता विवाह-

---

(१) यत् कङ्केलितरोर्दोहदं यच्च भगवान् त्रिलोचनः शीर्षे समुद्वहति ।

(२) आः दास्यः ! महाराजप्रियवयस्यं पिङ्गलिकाब्राह्मणीवल्लभं स्वस्रीयाणां पठितार्द्धपादं महाब्राह्मणमधिक्षिपथ । तदनेन युष्मादृशचेटीजनचित्तवृत्तिकुटिलेन दण्डकाष्ठेन भुजङ्गजनजुगुप्सितानि वदनानि करिष्ये ।

(३) मर्षतु मर्षतु आर्य्यः, सम्बन्धिन्य इति त्वया सह देवीविलासिन्य उपहासं कुर्वन्ति।

(४) अलमुपहासेन दुर्वासाश्चारायणः ।

---

(ब) कङ्केलितरोः अशोकवृक्षस्य दोहदं गर्भहेतुकं प्रमदापाद-ताडनमित्यर्थः त्रिलोचनः हरः यत् शिरसि धारयति कलामिति भावः ।

(भ) भुजङ्गजनजुगुप्सितानि विटजनदूषितानि ।

(म) देवीविलासिन्यः देवीसहचर्य्यः ।

(य) दुर्वासाः दुर्वासा मुनिरिव कोपन इत्यर्थः ।

मङ्गलवोचिदं करेह्म। सुलक्खणे! हारलट्ठि! कलकंठि! वसंतलदे! मंगलिए! कामकेलि! मिअंकलेहे! वउलावलि! परहुदिए! विअक्खणे! कल्पलदे! पहुणो रसविअक्खणस्स कंकणबंधनेन विरएध विआहदिक्खणं (र) (१)।

(सर्वाः समुपसृत्य रत्नावासःकुङ्कुमकङ्कणकुसुमादिकमुपनयन्ति)।

राजा। (नाट्येन परिधत्ते)।

विदू। (तदवशिष्टेन समालभनादिनात्मानं मण्डयति) (ल)।

विच। भोदिओ! किं विलंबेध आरंभरमणिज्जाणि (व) पअरणाइं होंति, ता एध गाएध णच्चध अ (२)।

---

(१) सुवासा भविष्यति साम्प्रतमेव, तद्विवाहोचितं कुर्मः। सुलक्षणे! हारयष्टि! कलकण्ठि! वसन्तलते! माङ्गलिके! कामकेलि! मृगाङ्कलेखे! वकुलावलि! परभृतिके! विचक्षणे! कल्पलते! प्रभो रसविचक्षणस्य कङ्कणबन्धनेन विरचयत विवाहदीक्षणम्।

(२) भवत्यः! किं विलम्बयथ, आरम्भरमणीयानि प्रकरणानि भवन्ति, तदेत वादयत गायत नृत्यत च।

---

(र) सुवासः सुखेन वासः वासकगृहे भवतः सुखेन भोजनीयव्यापारः। विदूषकं प्रत्युक्तिरियम्। प्रभोः स्वामिनः महाराजस्य रसविचक्षणस्य सुरतास्वादचतुरस्य कङ्कणबन्धनेन हस्तसूत्रबन्धनेन इत्यर्थः। विवाहदीक्षणम् उद्वाहसंस्कारम्।

(ल) तदवशिष्टेन राजगृहीतावशिष्टेन समालम्भनादिना अधिवासनद्रव्यादिना। मण्डयति भूषयति।

(व) आरम्भरमणीयानि आरम्भे उद्योगे रम्याणि प्रकरणानि वैवाहिकादयो व्यापाराः।

विदू। भो एदाणं मज्झे अहं वि गाइस्सं णच्चिस्सं अ (१)।

राजा। यदभिरुचितं भवते। (विदूषकेण सह सर्वा गायन्ति नृत्यन्ति च)।

नेपथ्ये। भो विअक्खणामुहीओ ! किं विलंबेध आणेध महाराअं, चउत्तरिअं सपरिवारा देवी संपत्ता ज्जेव (२)।

तरं। इदो इदो महाराओ (३) (सर्वे परिक्रामन्ति)।

ततः प्रविशति देवी बधूटीवेषा (ग्र) मृगाङ्कावली कुवलयमाला च)।

देवी। (अपवार्य) (ष) वच्छे ! कुवलअमाले ! पेक्ख अत्तणो भत्तुणो सुसिद्धं महिलावेसं (स) (४)।

(कुवलयमाला अवनतमुखी हसति)।

---

(१) भो एतासां मध्ये अहमपि गास्ये नर्त्तिष्ये च।

(२) भो विचक्षणामुख्यः ! किं विलम्बयत आनयत महाराजं, चतुष्किकां सपरिवारा देवी सम्प्राप्तैव।

(३) इत इतो महाराजः।

(४) वत्से ! कुवलयमाले ! प्रेक्षस्व आत्मनो भर्त्तुः सुसिद्धं महिलावेषम्।

---

(ग्र) बधूटीवेषा कृत्वा बधूः बाला इत्यर्थः कृत्वा वधूर्बधूटी स्यादित्यमरः तस्या वेषः परिच्छदः यस्याः तादृशी।

(ष) अपवार्य्य अपवारितकेन, तदुक्तं दर्पणे। तद् भवेदपवारितम्। रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यत इति।

(स) सुसिद्धं महिलावेषमित्यत्र सुसिद्धं मनोरथमिति पाठः समीचीनः।

राजा। ( स्वगतम् )

दिवस इवास्मि सतापश्चन्द्रमुखीत्वेन रात्रिवद्वेषा।
इदमपि चान्तररचितं रक्तांशुकमावयोः सन्ध्या ॥ ११ ॥

देवी। अज्जउत्त! उग्घालीअदु मुहं से उदेदु भवणगब्भे (ङ) चंदो (१)।

राजा। ( उपविश्य तथा कृत्वा स्वगतम् )।

नयनच्छलेन सुतनोर्वदनजिते शशिनि कुलपतौ क्रोधात्।
नासानालनिबद्धं स्फुटितमिवेन्दीवरं द्वेधा ॥ १२ ॥

देवी। वत्से! मिअंकावलि! कुण तारादंसणं, वित्थारय कुवलअसत्थरं (च) (२)।

---

(१) आर्य्यपुत्र! उद्घाटयतु मुखमस्याः उदेतु भवनगर्भे चन्द्रः।

(२) वत्से! मृगाङ्कावलि! कुरु तारादर्शनं, विस्तारय कुवलयसंस्तरम्।

---

(११) दिवस इति। अहं सतापः तापेन अन्तस्तापेन आतपतापेन च सहितः दिवस इव अस्मि भवामि। एषा मृगाङ्कावली च चन्द्रमुखीत्वेन हेतुना रात्रिवत् रजनीव। इदमपि आवयोः अन्तररचितं मध्यस्थितं रक्तांशुकं रक्तवस्त्रं सन्ध्या प्रतिभातीति शेषः। आर्य्यावृत्तम्।

(ङ) भवनगर्भे गृहाभ्यन्तरे।

(१२) नयनेति। कुलपतौ निजकुलस्वामिनि शशिनि वदनेन जिते पराभूते सति नयनच्छलेन नेत्रव्याजेन नासानालनिबद्धं नासिकारूपे नाले अवबद्धम् इन्दीवरं नीलोत्पलं क्रोधात् द्वेधा द्वाभ्यां प्रकाराभ्यां स्फुटितमिव विदीर्णमिव। अत्र क्रोधादिति हेतूत्प्रेक्षा। आर्य्यावृत्तम्।

(च) कुवलयसंस्तरं नीलोत्पलरूपं संस्तरं शयनीयम्।

मृगा । (लज्जावशादितस्ततश्चक्षुषी निधाय चिरमूर्ध्व-मवलोकयति )।

राजा । ( स्वगतम् )

भवनभुवि सृजन्तस्तारहारावतारान्
दिशि दिशि विकिरन्तः केतकानां कुटुम्बम् ।
वियति च रचयन्तश्चन्द्रिकां दुग्धमुग्धां
प्रतिनयननिपाताः सुभ्रुवो विभ्रमन्ति ॥ १३ ॥

विदू । ( जनान्तिकेन ) एसा कुवलअमाला तिरिच्छेहिं (क) दिट्ठिच्छडाकडक्खेहिं पिबदिव्व (१) ।

राजा । एवमेतत् ।

प्रणालीदीर्घस्य प्रतिपदमपाङ्गस्य सुहृदः
कटाक्षव्याक्षेपाः शिशुशफरफालप्रतिभुवः ।
सुधानाः सर्वस्वं कुसुमधनुषोऽस्मान् प्रति सखे !
नवं नेत्राद्वैतं कुवलयदृशः संनिदधति ॥ १४ ॥

---

( १ ) एषा कुवलयमाला तिर्यग्भिर्दृष्टिच्छटाकटाक्षैः पिबतीव ।

---

( १३ ) भवनभुवीति । सुभ्रुवः अस्याः प्रतिनयननिपाताः नेत्र-विक्षेपाः भवनभुवि गृहतले तारान् महतः हारावतारान् सृजन्तः वर्धन्तः, दिशि दिशि प्रतिदिशं केतकानां केतकीपुष्पाणां कुटुम्बं परिवारं समूहमिति भावः विकिरन्तः विक्षिपन्तः, वियति चाकाशे दुग्धमुग्धां दुग्धवत् मनोहारिणीं चन्द्रिकां रचयन्तः विस्तारयन्तश्च विभ्रमन्ति । परिभ्रमन्ति । मालिनीवृत्तम् ।

(क) तिर्यग्भिः कुटिलैः ।

(१४) प्रणालीति । हे सखे ! कुवलयदृशः नीलोत्पलाक्ष्याः अस्याः प्रणालीदीर्घस्य प्रणालीवत् आयतस्य अपाङ्गस्य नेत्रान्तस्य प्रतिपदं प्रति-

किं पुनः परकलत्रमेषा ?

विदू । सिणिद्धगदीए (ख) तुह ज्जेव एसा (१) ।

देवी । ( जनान्तिकेन कुवलयमालां प्रति ) पेच्छ पेच्छ अत्तणो भत्तारं अज्जउत्तेण परिणिज्जमाणं । ( प्रकाशम् ) अज्जउत्त ! संपदं दिज्जंदु भामरीओ, हुदवहम्मि होमिज्जंतु लाआ (२) ।

राजा । (परिणीयोपविशति) ।

प्रविश्य प्रतीहारी । देव ! देवीमादुलस्स चन्दवम्मस्स पहाणदूदेण सह अज्जभाउराअणो दुवारे चिट्ठदि ( ३ ) ।

राजा । ( देवीमुखमवलोकयति ) ।

देवी । अविलंबिदं पवेसेहि ( ४ ) ।

---

( १ ) स्नेहगत्या तवैवैषा ।

( २ ) पश्य पश्य आत्मनो भर्त्तारं आर्य्यपुत्रेण परिणीयमानम् । आर्य्यपुत्र ! साम्प्रतं दीयतां भ्रामर्य्यः, हुतवहे हूयन्तां लाजाः ।

( ३ ) देव ! देवीमातुलस्य चन्द्रवर्म्मणः प्रधानदूतेन सह आर्य्यभागुरायणो द्वारे तिष्ठति ।

( ४ ) अविलम्बितं प्रवेशय ।

---

क्षणं प्रतिविस्तारक्षणमित्यर्थः सुहृदः सहकारिणः, शिम्बूनां नवानां शफराणां मत्स्यभेदानां फालस्य उल्लम्फनस्य प्रतिभुवः समानाः तथा कुसुमधन्वनः कामस्य सर्वस्वं सर्वां सम्पत्तिं सुवाना उत्पादयन्तः कटाक्षविक्षेपाः अस्मान् प्रति नवं नवीनं नेत्रयोरद्वैतम् एकीभावं कल्पयन्ति । उपमालङ्कारः । शिखरिणीवृत्तम् ।

(ख) स्नेहमया प्रेमप्रसरेण ।

प्रतीहारी । तह त्ति ( १ ) । ( निष्क्रान्तः ) ।

( ततः प्रविशति भागुरायणो दूतश्च ) ।

उभौ । जयतु जयतु त्रिलिङ्गाधिपो देवः ।

भागु । इतो लाटाधिपतेर्दूतः ।

राजा । (उपविश्य) निवेद्यतामपि कुशलं चन्द्रवर्मणः ?

दूतः । देवानुग्रहेण ।

देवी । कुसलं मे मातुलाणीए हारलदाए ( २ ) ।

दूतः । अथ किम् ?

देवी । अवि सुमरेदि मं गुरुजणो ? ( ३ ) ।

दूतः । अन्तरात्मापि विस्मर्यते ( ग ) । (देवीं प्रति) । मातुलपुत्रजन्मना दिष्ट्या वर्धसे ? ( सर्वे हर्षं नाटयन्ति ) । संदिष्टं चास्मत्स्वामिना ।

निःसूनुना प्राक् परिकल्पिताऽभूत्तया मृगाङ्कावलिरेव पुत्रः ।
पुत्रावकल्पश्च्युतश्च सेयमानायिता वः सचिवोत्तमेन ॥१५॥

---

( १ ) तथेति ।

( २ ) कुशलं मे मातुलान्या हारलतायाः ।

( ३ ) अपि स्मरति मां गुरुजनः ?

---

(ग) अन्तरात्मा जीवात्माऽपि विस्मर्यते न तु देवीति शेषः ।

(१५) निःसूनुनेति । निःसूनुना अपुत्रेण मया प्राक् मृगाङ्कावलिरेव पुत्रः परिकल्पिता अभूत् पुत्रोऽयं मे इति प्रचारिता इत्यर्थः । वः युष्माकं सचिवोत्तमेन प्रधानमन्त्रिणा सा इयं मृगाङ्कावलिः पुत्रावकल्पच्युततः आनायिता चरैरिति शेषः । उपजातिवृत्तम् ।

जातः सम्प्रति मे कुलैकतिलकः पुत्रस्तदेषा त्वया
भव्या कान्तिमती कलासु कुशला केलिप्रिया नीतिभूः।
दैवज्ञोदितचक्रवर्त्तिगृहिणीभावा मृगाङ्कावली
देया कस्यचिदिन्दुसुन्दरयशःपूतस्य पृथ्वीपतेः॥ १६॥

भागु। (स्वगतम्) फलितं नो नीतिपादपलतया (घ) धिया।

विदू। (हस्तमुद्यम्य) भो दिसा परिणीदा अ एसा, किं ण पेक्खसि पओट्ठे दररत्तसुत्तकंकणं पिअवअस्सस्स मिअंकावलीए अ मंडिदं किदं वरइत्तिअं? (ङ) (१)। सर्वे विस्मयन्ते।

देवी। (जनान्तिकेन) पेक्ख देव्वदुल्ललिदाइं, जं मए केलिकिलंतणेण अलीअं पड़िकप्पिदं तं सच्चत्तणेण परि-

---

(१) भो दत्ता परिणीता च एषा, किं न प्रेक्षसे प्रकोष्ठे दररक्तसूत्रकङ्कणं प्रियवयस्यस्य मृगाङ्कावल्याश्च मण्डितं कृतं वरयितृकम्?

---

(१६) जात इति। सम्प्रति मे मम कुलस्य वंशस्य एकतिलकः पुत्रः जातः। तस्मात् त्वया भव्या सुचरित्रा कान्तिमती कलासु चतुःषष्टिविद्यासु कुशला केलिप्रिया क्रीड़नशीला नीतिभूः सुनीतिसमन्विता नीतिकुशला वा तथा दैवज्ञेन उदितः कथितः चक्रवर्त्तिनः सार्वभौमस्य गृहिणीभावः यस्याः तादृशी एषा मृगाङ्कावली इन्दुरिव सुन्दरं यशो यस्य तादृशस्य कस्यचित् पृथ्वीपतेः देया दातव्या। शार्दूलविक्रीड़ितं वृत्तम्।

(घ) नीतिपादपलतया नीतिरेव पादपः तस्य लता तदवलम्बिनी लता तया सुनीतिसम्पन्नया इत्यर्थः।

(ङ) वरयितृकमित्यत्र वरस्त्रीत्वमिति पाठः सङ्गतः।

वदं । (विचिन्त्य) भोदु एव्वं दाव । (प्रकाशम्) अज्ज-मादुलसंदेशमंतरेण वि मए परिणाविदा (च) एव्व एसा (१)।

दूतः । देवि ! भवादृशीनां बुद्धयो यदृच्छयापि प्रवृत्ताः कार्य्यमनुरुन्धानाः (छ) परिणमन्ति ।

विदू । (जनान्तिकेन) देवी एसा पच्छात्तावे (ज) पड़िदा (२)।

राजा । तथैव । अनुगुणं (झ) हि दैवं सर्वस्मै स्वस्ति करोति ।

देवी । (जनान्तिकेन) हला अह्मि कज्जवाहि-

---

(१) प्रेक्ष दैवदुर्ललितानि, यन्मया कैलिक्रीड़ितकेनालीकं परिकल्पितं तत्सत्यत्वेन परिणतम् । भवत्वेवं तावत् । आर्य्य मातुलसन्देशमन्तरेणापि मया परिणायितैवैषा ।

(२) देवी एषा पश्चात्तापे पतिता ।

---

(च) जनान्तिकं, तदुक्तं दर्पणे । त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम् । अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकमिति । दैवदुर्ललितानि दैवदुश्चेष्टितानि । कैलिक्रीड़ितकेन परिहासक्रीड़ाच्छलेन । परिणायिता विवाहिता ।

(छ) कार्य्यमनुरुन्धाना कर्त्तव्यमनुसारिण्य इत्यर्थः ।

(ज) पश्चात्तापे मृगाङ्कावल्याः प्रभावेण राज्ञश्चक्रवर्त्तित्वलाभात् सौभाग्यातिशयमाशङ्क्येति भावः ।

(झ) अनुगुणम् अनुकूलम् ।

रित्तीओ भामिदाओ एताणं उण साणुबंधाणं एस प्पबंधो (ञ) ( १ )।

मेखला। जधा एव्व देवीए महानुभावत्तणं ( ट ) अंगीकिदं तह एव्व णिव्वाहीअदु, किं गदे सलिले सेतुबंधेण ? किं गदे विआहे णक्खत्तपरिक्खाए ? ( २ )।

विदू। भो अमच्चचूड़ामणि ! अहिणवचाणक्को ( ठ ) भवं। भाउराअण एसा वि कुवलअमाला पिअवअस्सस्स एव्व जदो महामुणिणो वि एव्वं मंतअंति (ड)—

भज्जा दासो अ पुत्तो अ णिद्धणा सअला वि ते।

---

( १ ) हला वयं कार्य्यवाहिरीत्या भ्रान्ताः एतयोः पुनः सानुबन्धयोरेष प्रबन्धः।

( २ ) यथैव देव्या महानुभावत्वमङ्गीकृतं तथैव निर्वाह्यतु, किं गते सलिले सेतुबन्धेन ? किं गते विवाहे नक्षत्रपरीक्षया ?

---

( ञ ) अह्मे वयमित्यर्थः। कार्य्यवाहिरीत्या कार्य्यवाहिन्या रीत्या कार्य्यगत्या इत्यर्थः भ्रान्ता भ्रमे पतिताः अचतुरैव कार्य्ये प्रवृत्ता इत्यर्थः। एतयोः वधूवरयोः सानुबन्धयोः सपरिजनयोः। प्रबन्धः दैवनिर्बन्ध इति भावः।

( ट ) महानुभावत्वम् उदारशीलत्वम्।

( ठ ) अभिनवचाणक्यः। पुरा किल चाणक्यः महामन्त्री बुद्धिबलेन सर्वान् शत्रून् निर्जित्य वशमानीय च यथा राजानं चन्द्रगुप्तमेकच्छत्रमकरोत् तथा त्वमपि बुद्धिप्रभावेण स्वं स्वामिनं चक्रवर्त्तिनं करोषीति भावः।

( ड ) मन्त्रयन्ति भाषन्ते।

जं ते समधिअच्छंति जस्स ते तस्स तं धणं (१) ॥ १७ ॥

दूतः । अहो ! स्मृतिवैशारद्यं महाराजनर्मसचिवस्य (ढ) चारायणस्य ।

भागु । यथाह चारायणः । किं पुनरनेनैव कङ्कणेन, देवि ! परिणाययैनामपि (ण) ।

देवी । जहा समत्थेदि (त) महामच्चो (२) ।

विदू । (कुवलयमालाया हस्तं गृहीत्वा राजहस्ते विनिवेश्य) भो जाणवदेण (थ) सालभञ्जा अव्भञ्ज त्ति

---

(१) भो अमात्यचूडामणे ! अभिनवचाणक्यो भवान् । भागुरायण एषापि कुवलयमाला प्रियवयस्यस्यैव यतो महामुनयोऽप्येवं कथयन्ति—

"भार्य्या दासश्च पुत्रश्च निर्धनाः सकला अपि ।

यत् ते समधिगच्छन्ति यस्य ते तस्य तद्धनम्" ॥

(२) यथा समर्थयति महामात्यः ।

---

(१७) भार्य्या इति । भार्य्या पत्नी दासः भृत्यः पुत्रश्च एते सकलाः सर्वेऽपि निर्धनाः धनरहिता अस्वामिन इत्यर्थः । ते भार्य्यादयः यत् वस्तु समधिगच्छन्ति लभन्ते उपार्जयन्तीत्यर्थः यस्य स्वामिनः ते भार्य्यादयः, तत् धनं तस्य भवतीत्यर्थः । कुवलयमाला मृगाङ्कावल्याः सहचरीत्वेन दासत्वमनुचिन्त्यम् ।

(ढ) स्मृतिवैशारद्यं स्मरणशक्तिमत्त्वमिति यावत् महाराजस्य नर्मसचिवस्य रहस्यसहायस्य ।

(ण) किं पुनः, पुनराडम्बरेन किमित्यर्थः । कङ्कणेन हस्तसूत्रेण । परिणायय विवाहय एनां कुवलयमालामित्यर्थः ।

(त) समर्थयति अवधारयति ।

(थ) जानपदेन लोकप्रवादेन ।

उच्चदि, भवदो उण सअलभज्जा संवुत्ता (१) (सर्वे हसन्ति) ।

देवी । (सविलचं स्मयते) ।

विदू । (चेटीः प्रति) भोदीओ ! गाएध णच्चध, अहं पि गाइस्सं णच्चिस्सं । जदो विआहसंपुडो वुत्तो त्ति (२) ।

(तथा कुर्वन्ति) ।

मृगा । (अपवार्य्य सहर्षम्) एहि कुवलअमाले ! परिरंभस्सु मं कलत्तं भविअ सवत्ती संवुत्तासि ? (३) ।

भागु । (दक्षिणाक्षिस्पन्दं सूचयित्वा जनान्तिकेन) न जाने किं पुनरन्यदपि हर्षकारणम् (द) ।

प्रविश्य—प्रतीहारी । देव ! सिरिवत्साहिहेअसेणावदिणो (ध) आअदो कुरंगओ लेहहत्थओ दुआरे चिट्ठइ (४) ।

भागु । प्रवेशय तम् ।

---

(१) भो जानपदेन ग्राम्यभार्य्या अर्द्धभार्य्येत्युच्यते, भवतः पुनः सकलभार्य्या संवृत्ता ।

(२) भवत्यः ! गायत नृत्यत, अहमपि गास्ये नर्त्तिष्ये । यतो विवाहसंपुटो वृत्त इति ।

(३) एहि कुवलयमाले ! परिरभस्व मां कलत्रं भूत्वा सपत्नी-संवृत्तोऽसि ?

(४) देव ! श्रीवत्साभिधेयसेनापतेरागतः कुरङ्गको लेखहस्तो द्वारे तिष्ठति ।

---

(द) हर्षकारणम् उपस्थितमिति शेषः ।

(ध) श्रीवत्साभिधेयसेनापतिः श्रीवत्साभिधेयस्य सेनापतेः सकाशादित्यर्थः ।

प्रती। (निष्क्रान्ता)।

ततः प्रविशति कुरङ्गकः। (प्रणम्य) जेदु जेदु भट्टा (१)। (लेखं प्रक्षिपति)।

भागु। गृहीत्वा वाचयति—

स्वस्ति श्रीमन्नृपुर्य्यां तुहिनकरसुतावीचिवाचालितायां
देवं कर्पूरवर्षं विनयनतशिराः सर्वसेनाधिनाथः।
श्रीवत्सो वत्सलत्वात्सुरललनवधूलोचनैरर्च्यमाने
पादद्वन्द्वारविन्दे क्षणमभिरचयत्यञ्जलिं मूर्ध्नि भक्त्या ॥ १८ ॥

श्रेयोऽन्यत् कार्य्यं च लिख्यते। करचुलितिलकस्य पार्थिवस्य तव प्रतापेन महामन्त्रिभागुरायणस्य मतिवैभवेन मादृशानां च पदातिलवानामादेशनिर्वहणेन प्राची-

---

(१) जयतु जयतु भर्त्ता।

---

(१८) स्वस्तीति। हे श्रीमन्! स्वस्ति भवत इति अस्तु इति च शेषः। तुहिनकरस्य चन्द्रस्य सुता नर्मदा तस्या वीचिभिः तरङ्गैः वाचालितायां मुखरायां नृपुर्य्यां तदाख्यराजधान्यां स्थितमिति शेषः कर्पूरवर्षं नाम देवं राजानम् अभि राज्ञस्तस्य आभिमुख्यविधानार्थमित्यर्थः सर्वसेनाधिनाथः श्रीवत्सः वत्सलत्वात् अनुरक्तत्वात् विनयेन नतं शिरो यस्य तथाभूतः सन् सुरललनवधूनां लोचनैः अर्च्यमाने पूज्यमाने अभिनन्द्यमाने इत्यर्थः पादद्वन्द्वारविन्दे चरणकमलयुगले भक्त्या क्षणं मूर्ध्नि शिरसि अञ्जलिं रचयति शिरोबद्धाञ्जलिर्देवं विज्ञापयतीत्यर्थः। स्रग्धरावृत्तम्। म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति लक्षणात्।

प्रतीच्युदीचीदिग्विभागे सर्व एव राजानश्चण्डवृत्तयो दण्डोपनताः स्थिताः केवलमवाचीक्षितिपतयो दृश्यन्ते स्म। तत्रापि विनिवेद्यते। तत्कुल्यापहृतराज्यः कुन्तलाधिपतिर्वीरपालो देवं शरणमागतो देवादेशाच्च तं पुरस्कृत्य वयं पयोष्णीतीरे समावासिताः (न)। तदा च।

कार्णाटो युद्धतन्त्रे चतुरतरमतिः सिंहलः सिंहकर्मा
पाण्ड्यश्चण्डासियष्टिर्मुरलपरिवृढः कार्मुकप्रौढबाहुः।
आन्ध्रो नीरन्ध्रसारः समरभुवि सुरः कुन्तलः कुन्तलेशः
किंचान्ये कोङ्कणाद्या अपि नरपतयः संश्रिताः सद्वृत्तिम् १८

---

(न) करचुलितिलकस्य करचुलिनामकदेशतिलकस्य। मतिवैशद्येन बुद्धिनैर्मल्येन। पदातिलवानां पत्तिबिन्दूनां सामान्यपदातिकबलानामिति साहङ्कारपरिहारोक्तिः। आदेशनिर्वहणेन आदेशानुरूपानुष्ठानेन। चण्डवृत्तयः तीक्ष्णव्यवहाराः अतिदृप्ता इत्यर्थः दण्डोपनीताः दण्डेन चतुर्थोपायेन उपनीताः वशमानीताः। दृश्यन्ते अनायत्ता इति शेषः। तत्कुल्यापहृतराज्यः तस्य कुल्यैः वंशीयैः अपहृतं राज्यं यस्य तथोक्तः। पयोष्णीतीरे पयोष्णी नाम नदी तस्यास्तीरे। समावासिताः सम्यक् कृतावासाः।

(१८) कार्णाट इति। कार्णाटः कर्णाटदेशभवः युद्धतन्त्रे समरव्यापारे चतुरतरमतिः अतिनिपुणबुद्धिः सिंहस्येव कर्म यस्य तादृशः सिंहलः तदाख्यो नरपतिः, चण्डा तीक्ष्णा असियष्टिः खड्गलता यस्य तादृशः कार्मुकाः कर्मणि कुशलाः प्रौढाः समुन्नता बाहवः अश्वादयः यस्य तथाभूतः मुरलानां देशानां परिवृढः अधिपतिः पाण्ड्यः तदाख्यो नरपतिः, नीरन्ध्रः अच्छिद्रः निर्दोष इत्यर्थः सारो बलं यस्य तादृशः आन्ध्रः अन्ध्रदेशनरपतिः तथा समरभुवि रणस्थले सुरः देवसदृश इत्यर्थः कुन्तलेशः कुन्तलदेशाधिपतिः कुन्तलः तदाख्यो नृपः किञ्च किं बहुना इत्यर्थः

अत्रान्तरे तैः सहास्मदीयानामपि बलानां समरसंमर्दो वृत्तः ।

राजा । समरकर्मणि निसर्गोद्भटा (प) एव कार्णाटाः ।

भागु । वाचयति । तत्र च ( फ )

प्रेयान् मेदन्तिदन्तप्रवसदसुरयं वल्लभो मे विपक्षः
कुन्तप्रोतोऽपि योऽयं स्मरति मम रुचिस्ताण्डवी यत् कबन्धः ।
अत्रास्मत्प्रेमबद्धभ्रुकुटिसुखमिदं यस्य लूनेऽपि कण्ठे
युद्धे देवाङ्गनानामिति वरवरणे न श्रुताः केन वाचः ॥२०॥

किं बहुलिखितेन तान्विजित्यास्माभिः स्वराज्ये वीरपालोऽभिषिक्तः । शेषं कुरङ्गकमुखादेवावगन्तव्यम् ।

कुर । भट्टा पडहस्स विअ मे मुहं अत्थि ण उण वाणी (१)

---

( १ ) भर्त्तः पटहस्येव मे मुखमस्ति न पुनर्वाणी ।

---

अन्येऽपि कोङ्कणाद्याः कोङ्कणप्रमुखाः नरपतयः सङ्कट्टन्ति साहित्यं सम्भूयरणव्यापारमित्यर्थः संश्रिताः कर्त्तुमुद्यता इत्यर्थः । स्रग्धरावृत्तम् ।

(प) निसर्गोद्भटा स्वभावतः समुद्धताः ।

(फ) तत्र च युद्धे इत्यर्थः ।

( २० ) प्रेयानिति । दन्तिदन्तैः करिदन्तप्रहारैः प्रवसन्तः प्रवासं गच्छन्तः असवः प्राणा यस्य तथाभूतः गतासुरित्यर्थः, अयं वीर इति शेषः मे मम प्रेयान् अतिप्रियः वल्लभः कान्तः, यः अयं विपक्षाणां शत्रूणां कुन्तैः अस्त्रविशेषैः प्रोतोऽपि विद्धोऽपि स्मरति सन्दृते वीर्यातिशयादिति भावः । यत्कबन्धः यस्य कबन्धः अशिरस्कं शरीरं मम रुचेः अभिलाषस्य ताण्डवी नर्त्तकः नर्त्तनेन मम रुचिं वर्द्धयतीत्यर्थः । यस्य

राजा। लेखमुखा एव लेखवाहा (ब) भवन्ति।

भागु। तदधुना—

आगङ्गापातपूतप्लुतपुलिनतटात् पूर्वतस्ताम्रपर्णी
पूर्णादादाक्षिणात्यात्तुहिनकरसुतावल्लभादाप्रतीचः।
नृत्यच्चण्डीशचूड़ाच्युतविबुधनदीनन्दितात्तावदेव
क्षीराम्भोधेरुदीचः करचुलितिलको वर्त्तते चक्रवर्त्ती ॥२१॥

(राजानं प्रत्यञ्जलिं बध्वा) किं ते भूयः प्रियमुपकरोमि?

---

कण्ठे लूने छिन्नेऽपि इदं छिन्नमित्यर्थः सुखम् अत्र रणक्षेत्रे अप्रमतप्रेम-बद्धभ्रुकुटि अस्माकं प्रेमणि प्रणयविशेषे बद्धा भ्रुकुटिः भ्रुभङ्गिर्येन तादृशं वर्त्तते इति शेषः युद्धे रणभूमौ देवाङ्गनानां वरवरणे कान्तवरण-प्रसङ्गे इति एवंविधाः वाचः केन न श्रुताः सर्वैरेव श्रुता इत्यर्थः युद्ध-हतस्य स्वर्गलाभात् देवाङ्गनाभोगश्चवर्णादित्यनुसन्धेयम्।

(ब) लेखमुखा लेखः लिखितवचनमेव मुखे येषां तथोक्ताः, लेख-वाहाः पत्रवाहाः।

(२१) आगङ्गेति। करचुलितिलकः करचूलिसंज्ञकदेशाधि-पतिः भवान् इति शेषः गङ्गायाः पातेन पूतं पवित्रीकृतं प्लुतं क्षालितञ्च पुलिनतटं यस्य तादृशात् पूर्वतः पूर्वसीम्नः आ पर्य्यन्तं ताम्रपर्णी नाम नदी तया पूतात् दाक्षिणात्यात् दक्षिणसीम्नः आ पर्य्यन्तं तुहिनकरस्य चन्द्रस्य सुता नर्मदा तस्या वल्लभात् प्रतीचः पश्चिमसीम्नः आ पर्य्यन्तं तथा नृत्यन् यः चण्डीशः हरः तस्य चूड़ायाः शिखायाः च्युता या विबुधनदी गङ्गा तया नन्दितात् क्षीराम्भोधेः क्षीरसागरात् उदीचः उत्तरात् तावदेव तथैव पर्य्यन्तमित्यर्थः चक्रवर्त्ती सम्राट् वर्त्तते। स्रग्धरावृत्तम्।

राजा । अतः परमपि प्रियमस्ति ।

देवी कोपकषायितानुगमिता लब्धा मृगाङ्कावली
प्रागूढ़ापि ममाद्य कुन्तलपतेः पुत्री कलत्रीकृता ।
युष्मन्नीतिवशेन तस्य च महत्सेनापतेर्विक्रमैः
सञ्जाता मम चक्रवर्तिपदवी किं नाम यत् प्रार्थ्यते ॥२२॥

तथापीदमस्तु:—

वामाङ्गं पृथुलस्तनस्तवकितं यावद्भवानीपते-
र्लक्ष्मीकण्ठहठग्रहव्यसनिता यावच्च दोष्णां हरेः ।
यावच्च प्रतिमाप्रसारणविधौ व्यग्रौ करौ ब्रह्मणः
स्थेयासुः श्रुतिशुक्तिलेह्यमधुरास्तावत् सतां सूक्तयः ॥ २३ ॥

---

(२२) देवीति । कोपेन क्रोधेन कषायिता खण्डिता, जातेऽन्यसङ्गचिह्ने खण्डितेषांकषायिता इति लक्षणात् । देवी महाराज्ञी अनुगमिता सान्त्विता अनुकूला जातेत्यर्थः । मृगाङ्कावली यत्प्रभावात् चक्रवर्त्तित्वमिति भावः लब्धा प्राप्ता । प्राक् पूर्वम् ऊढ़ापि परिणीतापि रहसीति भावः कुन्तलपतेः पुत्री अद्य मया कलत्रीकृता प्रकाशतः स्त्रीत्वेन परिगृहीतेत्यर्थः । युष्माकं नीतिवशेन नयकौशलेन तथा महत्सेनापतेः श्रीवत्सस्य विक्रमैः मम चक्रवर्त्तिपदवी सार्वभौमत्वं सञ्जाता, अतः यत् प्रार्थ्यते अभिलष्यते तत् किं नैव किञ्चिदपि मे अन्यत् आशास्यमिति भावः । शार्दूलविक्रीड़ितं वृत्तम् ।

(२३) वामाङ्गमिति । यावत् भवानीपतेः हरस्य वामाङ्गं पृथुलेन विशालेन स्तनेन स्तवकितं पुष्पस्तवकेनेव अलङ्कृतं भातीति शेषः हरगौरीमूर्त्ताविति भावः । यावच्च हरेः नारायणस्य लक्ष्मीकण्ठस्य यः हठग्रहः सहसाग्रहणं तत्र व्यसनिता आसक्तिः वर्त्तते इति शेषः । यावच्च ब्रह्मणः विधातुः करौ हस्तौ प्रतिमानां सृष्टवस्तूनां प्रसारणं

( इति निष्क्रान्ताः सर्वे ) ।

इति श्रीमद्बालकविकविराजराजशेखरविरचितायां विद्धशालभञ्जिकानाटिकायां चतुर्थोऽङ्कः ।

नाटिका च समाप्तिमगात् ।

---

विस्तारः तद्देव विधिः व्यापारः तस्मिन् व्यग्रौ वर्त्तते ब्रह्मणः दृष्टिः चलतीत्यर्थः तावत् श्रुतीनां वेदानां सूक्तिभिः सुवचनैः लेह्या लेहनीयाः अत एव मधुराः मनोहारिण्यः सतां साधूनां सूक्तयः सुभाषितानि स्थेयासुः स्थितिं प्राप्नुयासुः । शार्दूलविक्रीडितं वृत्तम् ।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्यविरचित-
व्याख्यानं समाप्तम् ।

---

প্রিণ্টর—শ্রীক্ষেত্রমোহন মুখোপাধ্যায়
নং ২০ ঝামাপুকুর লেন।

প্রকাশক—শ্রীজীবানন্দ বিদ্যাসাগর
২নং রমানাথ মজুমদার ষ্ট্রীট।

बृहदारण्यक सटीक सभाष्य १०

० सुश्रुत वैद्यक ४

१ शार्ङ्गधर (वैद्यक) १

२ वेतालपञ्चविंशतिः ॥०

३ पातञ्जलदर्शन(सभाष्यसटीक) ४

४ आत्मतत्त्वविवेक(बौद्धाधिकार) २

५ मल्लिकोपनिषत् [illegible]

६ उपमान चिन्तामणि ।०

७ नागानन्द नाटक १

८ पूर्णप्रज्ञ दर्शनम् सभाष्य २

९ चन्द्रशेखरचम्पू काव्य १

० सामवेदस्य मन्त्र ब्राह्मणम् (भाष्य सहितम्) २

१ सामवेदस्य आर्षेयसंहिता सायणाचार्य्य कृत भाष्यसहिता १

२ विद्धशालभञ्जिकानाटिका सटीक १

७३ कारण्डव्यूह (बौद्ध सूत्र) २

७४ कुवलयानन्द अलङ्कार सटीक १

७५ प्रियदर्शिका नाटिका सटीक ॥

७६ सारस्वत व्याकरण सटीक पूर्वार्द्धम् १।

७७ वासवदत्ता सटीक २

७८ (कालिदास कृत) पुष्पबाणविलास काव्य सटीक ॥

७९ महिष शतकम्, पदारविन्द शतकम्, स्तुतिशतकम्, मन्दस्मितशतकम्, कटाक्षशतकम् १

८० मनुसंहिता टीका सहित ५

८१ नैषधचरितम् टीका सहित १०

८२ चन्द्रालोक प्राचीन अलङ्कार ॥

८३ वीरमित्रोदय (स्मृतिशास्त्र) १०

८४ भावप्रकाश (वैद्यक) १०

८५ प्रबोधचन्द्रोदय नाटक सटीक २

८६ अनर्घराघवनाटक(मुरारिकृत) २

८७ दैवतब्राह्मणसभाष्य १

८८ षड्विंशब्राह्मणम् सभाष्य १

८९ मीमांसा परिभाषा ।०

९० अर्थसंग्रह(लौगाक्षीमीमांसा ॥०

९१ रघुवंश सटीक ॥०

९२ मेघदूत सटीक ॥०

९३ पञ्चपारदसागर (सम्पूर्ण) ६

९४ ईश्वरानुमानचिन्तामणि (गङ्गेशोपाध्याय कृत) १

९५ न्यायदर्शन सभाष्य सवृत्ति २।

९६ सटीक वाल्मीकिरामायण बालकाण्डस्य प्रथमावधि सप्तषष्टि सर्गपर्य्यन्तम् २

९७ सटीक वाल्मीकिरामायण बालकाण्डस्य अष्टषष्टि सर्गावधि सप्तसप्तति सर्ग पर्य्यन्तम् १

९८ मदनपालनिघण्टुः(वैद्यक) १

९९ संस्कृतशिक्षामञ्जरीप्रथमभाग /

१०० संस्कृतशिक्षामञ्जरीद्वितीयभागः ।०

१०१ साहित्यदर्पणम्(अलङ्कार) १॥०

१०२ श्रीहर्षचरित बाणभट्टकृत २

१०३ अमरकोष ॥०

१०४ वेदान्तसूत्र शङ्कराचार्य्य कृत शारीरकभाष्य तथा गोविन्दानन्दकृत टीकासहित १०

१०५ वेदान्तपरिभाषा १

१०६ वेदान्तसारसटीक १

१०७ सटीक निदान(वैद्यक) ३

१०८ कामन्दकी नीतिसार १
१०९ मल्लिकामारुतप्रकरण सटीक २
११० अत्रि विष्णु, हारीत, याज्ञवल्क्य उशना अङ्गिरा यम आपस्तम्ब संवर्त्त कात्यायन बृहस्पति पराशर व्यास शङ्ख लिखित दक्ष गौतम शातातप वशिष्ठ प्रणीत संहिता (धर्मशास्त्र) १५
१११ मत्स्यपुराण ६
११२ चरकसंहिता (वैद्यक) सम्पूर्ण १०
११३ रसेन्द्रचिन्तामणि तथा रसरत्नाकर (वैद्यक) ६
११४ भगवद्गीता शाङ्करभाष्य आनन्दगिरिकृतटीका तथा सुबोधिनीसमेत ५
११५ शब्दशक्तिप्रकाशिका १
११६ मालतीमाधव सटीक १॥
११७ सटीक भट्टिकाव्य ४
११८ सटीक काव्यप्रकाश ४
११९ सभाष्य शाण्डिल्यसूत्र ॥/
१२० लघुकौमुदी व्याकरणम् ॥०
१२१ महानाटकम् (हनुमन्नाटक) १
१२२ दशरूपकम् (अलङ्कार) १॥०
१२३ भोजचम्पू (भोजदेव कृत चम्पूरामायणम्) १
१२४ भारत चम्पू सटीक ४
१२५ मार्कण्डेयपुराणम् ५

१२६ गोलाध्यायः
१२७ गणिताध्यायः
१२८ पञ्चदशी (सटीक)
१२९ पातञ्जलदर्शनस्य भोज
१३० प्रबोधचन्द्रोदयनाटक टीका
१३१ शब्दरूपादर्शः
१३२ बृहत्संहिता वा वाराहीसंहिता
१३३ तर्कामृत (जगदीश
१३४ द्वात्रिंशत्पुत्तलिका
१३५ उत्तररामचरित सटी
१३६ शङ्करविजय
१३७ मृच्छकटिकप्रकरण
१३८ काव्यादर्शसटीक(अ
१३९ अष्टाङ्गहृदयसंहित भटकृत वैद्यक )
१४० शुक्रनीति सटीक
४१ गीतगोविन्द सटीक
१४२ अग्निपुराणम्
१४३ विष्णुपुराणम् सटी
१४४ मीमांसादर्शन सभा
१४५ अध्यात्मरामायण
१४६ महानिर्वाणतन्त्र
१४७ मीमांसादर्शनस्य अधिकरणमाला
१४८ श्रुतबोधः (छन्दो

कलिकाता संस्कृतविद्यामन्दिरे—बि, ए,उपाधिधारिणः
श्रीजीवानन्द विद्यासागर भट्टाचार्य्य स्य सकाशात् प्र

